प्रणवः प्रणवाख्यवायुगः स उद्गीथ इति पुनरुक्तिरभेदोपचारनिवृत्त्यर्था । इति खलु प्रसिद्धमित्यर्थः । यद्वा इत्युपास्यन्निति शेषः । उद्गीथो वायुग इत्युक्तम् । कुत्र स्थिते वायौ प्रणवनामोद्गीथस्तिष्ठतीत्यत आह – **असाविति** ।। असावादित्य आदित्यस्थ उद्गीथो हरिः एष उद्गीथः प्रणवः । आदित्यस्थप्रणवशब्दितमुख्यवायुगत इत्यर्थः । एष आदित्यस्थवायुगत उद्गीथो हरिः ओमिति स्वरन् जपन् एति सञ्चरति । हि प्रसिद्धम् ।। १ ।।

*( सूर्यकिरणगतवायौ भगवदुपासनाफलकथनम् )*

**एतमु एवाहमभ्यागासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीꣳस्त्वं पर्यावर्तयताद् बहवो वै ते भविष्यन्तीत्यधिदैवतम् ।। २ ।।**

एतमु एवाऽदित्यगतमुख्यवायुस्थमोमिति स्वरन्तमुद्गीथमेकमहमभ्यगासिषं गानेन स्तुतवानभूवम् । तस्मादेकस्योपासनात् मम त्वमेकोऽसीति ह कौषितकिर्नाम मुनिः पुत्रमुवाच । पुत्रं प्रत्यन्यदप्युक्तवानित्याह – **रश्मीनिति** ।। हे पुत्र त्वं रश्मीन् रश्मिषु स्थितवायुगतभगवद्रूपाणि पर्यावर्त्तयताद् उपास्स्व । ते एवं ध्यायतस्तव बहवः पुत्रा भविष्यन्ति । अन्ततो विमुक्तिश्च भविष्यतीति च पुत्रमुवाचेति योजना । इत्यधिदैवतं पुत्रफलकोपास्तिरुक्तेत्यर्थः ।। २ ।।

*( इन्द्रियगतवायौ भगवदुपासनाफलकथनम् )*

**अथाध्यात्मं य एवायं मुख्यप्राणस्तमुद्गीतमुपासीतोमिति ह्येष स्वरन्नेति ।। ३ ।।**

अथाध्यात्मं सैवोपास्तिरुच्यत इत्यर्थः । य एवायं देहगो मुख्यप्राणस्तं तस्मिन्नुद्गीथं हरिमुपास्यन् अभ्यगासिषमित्यन्वयः । एष प्राणग ओमिति स्वरन् जपन्नेति ।। ३ ।।

*( अग्निस्थभगवदुपासनया सामगानदोषस्य प्रायश्चित्तनिरूपणम् )*

**एतमु एवाहमभ्यागासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणांस्त्वं भूमानमभिगायताद् बहवो वै ते भविष्यन्तीति ॥ ४ ॥**

एतमु एव देहस्थप्राणगतमुद्गीथमहमभ्यगासिषम् । तस्मादित्यादि प्राग्वत् । प्राणान् प्राणेषु स्थितं भूमानं परिपूर्णं हरिम् । इति पुत्रमुवाचेत्यनुषङ्गः ॥ ४ ॥

**अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरतीत्यनुसमाहरतीति ॥ ५ ॥**

**॥ खण्डः ५ ॥**

अथ खल्विति विद्यासमाप्तौ पुनरुक्तिः । दुरुक्त्यादिहेतुकपापनिवृत्त्यर्थामुपास्तिमाह – **होत्रिति** ॥ **'अग्निर्वै होता'** इत्युक्तेर्होता सदनमाश्रयो यस्य स होतृषदनोऽग्निः । होतृषदनात् होतृषदनाख्याग्निस्थितात्, ल्यब्लोपे पञ्चमी । होतृषदनस्थं हरिमुपास्यैव दुरुद्गीतमनु समाहरति अनुरूपमेव करोतीष्टहेतुं करोतीत्यर्थः । द्विरुक्तिरादरार्था विद्यासमाप्त्यर्था वा ॥ ५ ॥

॥ इति पञ्चमः खण्डः ॥

## अथ षष्ठः खण्डः

*( सरस्वतीवाय्वोरुपासना )*

**इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳसाम गीयते इयमेव साऽग्निरमस्तत् साम ॥ १ ॥**

वाच ऋग् रसः, ऋचः साम रस इति प्रकृतऋक्सामयोश्श्रेश्वरवर्गत्वाद् अधिदैवमध्यात्मं च तदुपास्तिपूर्वं तत्परिवृतोद्गीथोपास्तिमाह– **इयमेवेत्यादिना** ॥ इयमेव पृथिवीस्थैव वाणी ऋगित्युच्यते । अग्निरग्निस्थोऽग्निनामा वायुः साम । साममानी वायुः सर्वत्र समत्वात् सामेत्युच्यते । तदेतस्यामृचि ऋग्देव्यां वाण्याम् अध्यूढमारूढं साम । तस्माद् ऋग्देव्यां सामनाम्नो वायोरध्यूढत्वादेवाखिलैर्जनैर्ऋच्यध्यूढं बाह्यं साम गीयते । वाणीवाणीशावित्येतद् द्वयम् एकशरीरं सामनामकं वर्तत इत्याह – **इयमित्यादिना** ॥ इयमेव पृथिवीस्थैव वाग्देवी सेत्युच्यते, अग्निस्थो वायुरमः तदुभयं मिथुनं सामेत्युच्यते ॥ १ ॥

**अन्तरिक्षमेवर्ग् वायुः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत् साम ॥२॥**

एवमन्तरिक्षद्युनक्षत्रादित्यघटिते वाक्यचतुष्टयेऽपि योजना ध्येया । अन्तरिक्षमन्तरिक्षस्था वाग्देवी वायुः भूतवायुस्थः प्राणः ॥ २ ॥

**द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयते द्यौरेव साऽऽदित्योऽमस्तत् साम ॥३ ॥**

द्यौरेव द्युलोकस्था वाणी आदित्य आदित्यस्थः प्राणः ॥ ३ ॥

**नक्षत्राण्येवर्क् चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत् साम ॥ ४ ॥**

नक्षत्राण्येव नक्षत्रस्था वाणी । चन्द्रमाः चन्द्रमःस्थः प्राणः ॥ ४ ॥

**अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम**

**गीयतेऽथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत् साम ॥ ५ ॥**

शुक्लं भाः शुक्ले भासि प्रकाशे स्थिता वाणी, परः कृष्णम् अत्यन्तकृष्णं यन्नीलं तत्रस्थः प्राणः । सैवेति तत्रस्थेत्यर्थः ॥ ५ ॥

*( सूर्यान्तर्गतप्राणस्थभगवन्महिमा )*

**अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः ॥ ६ ॥**

किमेतौ वाणीवाणीशौ प्रधानपूज्यावित्यतोऽन्यसेवकतयेति वक्तुं तत्सेव्यं तन्महिमानं चाऽह – **अथ य इति** ॥ अर्थान्तरे अथशब्दः । य एष आदित्यान्तः पुरुषो हिरण्मयः विलक्षणसुखरूपः, स्वर्णवर्ण इति वा दृश्यते ज्ञानदृष्ट्या हिरण्यश्मश्रुः आप्रणखात् नखपर्यन्तं सर्व एव विग्रहः सुवर्णः अत्यन्तसुखरूप इत्यर्थः ॥ ६ ॥

**तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥ ७ ॥**

तस्याऽदित्यस्थस्य हरेः यथा कप्यासं कमुदकं पिवन्नालं कपि, तत्राऽस्त इति कप्यासं पुण्डरीकं रक्तपद्मं यथा एवमेतस्याऽदित्यस्थस्याक्षिणी । कं पिवन्नालसम्बन्धिनलिनायतलोचन इत्यर्थः । तस्योदिति नाम कुत इत्यत आह – **स एष इति** ॥ उदितः उद्गतः । ज्ञानिनः फलमाह – **उदेतीति** ॥ ७ ॥

**तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथस्तस्मात् त्वेवोद्गातैतस्य हि**

**गाता स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥ ८ ॥ खण्डः ६ ॥**

एवं सेव्यमुक्त्वा तत्सेवकावेतावित्याह – **तस्येति** ॥ आदित्यस्थस्य ऋक्साम वाक्प्राणौ गेष्णौ गायकौ । तस्माद् वाक्प्राणाभ्यामुद्गीतत्वादादित्यस्थः उद्गीथः उच्चोऽसौ गीयते चेत्युद्गीथः । तस्मादेव वाक्प्राणयोरेतद्गायकत्वादेवोद्गाता ऋत्विक् । एतस्याऽदित्यस्थस्य गाता हि प्रसिद्धम् । स एष आदित्यस्थः ये च अमुष्मात् स्वर्गात् पराञ्च उपरितनलोकास्तेषां चेष्टे देवकामानां स्वर्ग्यकामानां चेष्टे ईशो वर्तत इत्यधिदैवतमुद्गीथोपास्तिरुक्तेत्यर्थः ॥ ८ ॥

॥ इति षष्ठः खण्डः॥

## अथ सप्तमः खण्डः

*( देहगतऋक्साम्नोरुपासना )*

**अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयते वागेव सा प्राणोऽमस्तत् साम ॥ १ ॥**

अथाध्यात्मं देहस्थाक्षिगतस्योपास्तिरुच्यत इत्यर्थः । वागेव वागिन्द्रियस्था वाणी । प्राणः देहस्थप्राणेषु विद्यमानो मुख्यप्राणः । 'वागेव' इत्यारभ्य 'मनुष्यकामानां च' इत्यन्तस्य पूर्वत्रेवार्थो ध्येयः ॥ १ ॥

**चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयते चक्षुरेव सा प्राणोऽमस्तत् साम ॥ २ ॥**

चक्षुः चक्षुःस्थः आत्मा जीवः जीवस्थप्राणः सामेत्यर्थः ॥ २ ॥

**श्रोत्रमेवर्ङ् मनः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयते श्रोत्रमेव सा मनोऽमस्तत् साम ॥ ३ ॥**

श्रोत्रं श्रोत्रस्थं मनः मनोगतः प्राणः ॥ ३ ॥

**अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयतेऽथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत् साम ॥ ४ ॥**

शुक्लं भाः शुक्लभासि स्थिता वाणी । परः कृष्णं नीलगतः प्राणः सामेत्यर्थः । सैवेति तत्रस्थेत्यर्थः ॥ ४ ॥

*( अक्षिस्थोद्गीथमहिमा )*

**अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत् साम तदुक्थं तद्यजुस्तद् ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥ ५ ॥**

ताभ्यां सेव्यं भगवन्तमाह – **अथेति** ॥ दृश्यते ज्ञानदृष्ट्या सैव चक्षुःस्थः पुरुषः । विधेयापेक्षया स्त्रीलिङ्गनिर्देशः । ऋग्ज्ञानरूपत्वाद् ऋगित्युक्तः । नित्यं समत्वात् तद् अक्षिस्थः पुरुषः सामेत्युच्यते, उत्थापकत्वादुक्थं, याज्यस्वरूपत्वाद् यजुः, पूर्वरूपत्वाद् ब्रह्म । तस्यैतस्याक्षिस्थस्य तदेव रूपं यदेव हिरण्मयत्वादिकममुष्य आदित्यगतस्य रूपं तदेवेत्यर्थः । यौ वाक्प्राणावमुष्य सूर्यस्थस्य गेष्णौ तौ गेष्णौ गायकौ । एतस्येत्यनुषज्यते । अमुष्य यन्नाम उदिति तदेवैतस्य नाम ॥ ५ ॥

**स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति**

**तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात् ते धनसनयः ॥ ६ ॥**

स एष एवाक्षिस्थः पुरुषो हरिः एतस्माद् भूलोकादर्वाञ्चोऽधस्तन-लोकास्तेषां च मनुष्यकामानां चेष्टे इत्यर्थः । न केवलं वाक्प्राणावेव तस्य गायकौ, किन्तु लोके गायकाः सर्वेऽपि तद्गायका इत्याह – **तद्य इति** ॥ य इमे लौकिका राजादिपुरतः वीणायां गायन्तीति यत् तद् एतमेव हरिं ते गायन्ति । तस्माद् भगवद्गानादेव प्रसन्नाद् राजादौ सन्निहिताद्धरेः सकाशाद् धनसनयो धनप्राप्तिमन्तो भवन्ति । अन्यथा राजादेर-स्वातन्त्र्याद् धनप्राप्तिमन्तो न स्युरिति भावः ॥ ६ ॥

**अथ यदेतदेवं विद्वान् साम गायत्युभौ साम गायति सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकास्ताꣳश्चाऽप्नोति देवकामाꣳश्च ॥ ७ ॥**

एवमधिदैवमध्यात्मं चोक्तप्रमेयज्ञानपूर्वं गानं कुर्वतः फलमाह – **अथ य इति** ॥ योऽधिकारी एतद् ऋक्सामयोर्हरेश्च माहात्म्यम् एवमुक्तरूपेण विद्वान् जानन् साम गायति, स उभौ आदित्याक्षिस्थौ तद्विषयमिति यावत् साम गायति । तस्य फलान्तरमाह । स एष एव ज्ञानपूर्वं भगवद्गायकः अमुष्मात् स्वर्गात् पराञ्चो ये लोकास्तांश्चाऽप्नोति देवकामांश्च । लोककामयोर्जयः किं स्वसामर्थ्येन ? नेत्याह । सोऽमुनैव लोककामयोर्जयोऽमुनैव गानविषयेणाऽदित्यस्थेनैवेति ॥ ७ ॥

**अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताꣳश्चाऽप्नोति मनुष्यकामाꣳश्च तस्मादु हैवंविदुद्गाता ब्रूयात् ॥ ८ ॥**

अथानेनैवाक्षिस्थहरिणैव ये चैतस्माद् भूलोकादर्वाञ्चो लोकास्तां-

श्चाऽऽप्नोति मनुष्यकामांश्चेत्यन्योन्यसमुच्चये चशब्दौ । तस्मात् परमात्मगायकस्यातिशक्तत्वादेव ह एवंविदुद्गाता ब्रूयात् ॥ ८ ॥

**कं ते काममागायानीत्येष ह्येष कामगानस्येष्टे य एवं विद्वान् साम गायति साम गायति ॥ ९ ॥ ७ ॥**

ते यजमानस्य कं कामं कामितार्थमागायानीति ब्रूयादित्यन्वयः । एष ह्येव एवं ब्रुवन् ज्ञानी कामगानस्येष्टे शक्तो भवति । य एवं विद्वान् साम गायति, एष ह्येवेति पूर्वेणान्वयः । अत्र तात्पर्यं **'गायकस्तस्य विष्णोः'** इत्यादिभाष्याज्ज्ञेयम् । द्विरुक्तिरुक्तार्था ॥ ९ ॥ ७ ॥

## अथ अष्टमः खण्डः

*उद्गीथनामकभगवद्विषये कथा*

**त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैबिलिरिति ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति ॥ १ ॥**

उद्गीथाख्यो भगवान् सर्वोत्तम इत्युक्तम् । तत्, मीमांसारूपाख्यायिकया समर्थयते – **त्रय इत्यादिना** ॥ उद्गीथे सामविशेषे । ह प्रसिद्धम् । त्रीन् निर्दिशति । शिलको नामतः शलावत्यां भवः शालावत्यः, दाल्भ्यो नामतः चिकितायनस्यापत्यं चैकितायनः, प्रवाहणो नामतः जिबिलस्यापत्यं जैबिलिः, इत्येते त्रयः उद्गीथे निपुणतया प्रसिद्धा इत्यर्थः । ते त्रयः अन्योन्यमूचुः । हन्त हर्षे । उद्गीथे सामविशेषे वयं कुशलाः स्मः । उद्गीथविषये प्रश्नप्रत्युक्तिरूपां कथां वदामः कुर्म इत्यूचुः ॥ १ ॥

**तथेति ते ह समुपविविशुः स ह प्रवाहणो जैबिलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचꣳ श्रोष्यामीति स ह**

**शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच का साम्नो गतिरिति ॥ २ ॥**

तथाऽस्त्वित्युक्त्वा सहोपविविशुः। 'स ह प्रवाहणः उवाच ' इत्यस्य 'श्रोष्यामि' इत्यन्वयः । ब्राह्मणयोर्भवतोरिति शेषः । ब्राह्मणयोरित्युक्त्या प्रवाहणः क्षत्रिय इति वदन्ति । शिष्टं व्यक्तम् । त्वा त्वां पृच्छेति होवाच, दाल्भ्य इत्यनुषङ्गः । पृच्छति– **का साम्नो गतिरिति ॥** साम्नः सामाभिमानिनोऽग्नेः का गतिः ? मुक्तौ प्राप्यः क इत्यर्थः ॥ २ ॥

*( शिलककृतप्रश्नानां दाल्भ्याभिहितोत्तराणि )*

**स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाचापां का गतिरित्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति ॥ ३ ॥**

उत्तरमाह– **स्वर इति ॥** स्वराभिमानी वरुण इत्यर्थः । एवमग्रेऽपि प्रश्नप्रतिवचने ध्येये । सामादिपदानां देवतासु निरुक्तिर्भाष्यादवसेया । प्राणः प्राणवायोरभिमानी सूर्यः । अन्नम् अन्नाभिमानी दक्षः । आपः अबभिमानी शक्रः । असौ लोको द्युलोकमानी शिवः ॥ ३ ॥

**न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकं सामाभिसंस्थापयामः स्वर्गसꣳस्तावं हि सामेति तं ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यं उवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ४ ॥**

उत्तरमाह – **न स्वर्गमिति** ॥ स्वर्गलोकशब्दितं शिवमतिक्रम्य न नयेत् । प्रश्नमिति शेषः । न पृच्छेदिति यावत् । वयं स्वर्गं लोकं शिवं प्रति साम संस्थापयामः, तत्प्रतिपादनेन पर्यवसितं कुर्म इत्यर्थः । कथं साम स्वर्गसंस्तावं स्वर्गाख्यशिवसंस्तुतिपरमेवेति संस्थापयाम इत्यन्वयः । यद्वा हि यतः साम स्वर्गसंस्तावमतः स्वर्गं प्रति संस्थापयाम इति । एवमग्रेऽपि । **अप्रतिष्ठितं** स्वर्गाख्यप्रतिपादनेन न पर्यवसितमित्यर्थः । एवं तर्हि इदानीं स्वर्गसंस्तावं सामेत्यक्तिकाले यस्तु ब्रह्मज्ञानी ते स्वर्गसंस्तावं सामेति वदतस्तव मूर्धा शिरः विपतेदिति ब्रूयाच्चेत् मूर्धा ते विपतिष्यतीत्युवाच शिलक इत्यन्वयः ॥ ४ ॥

*( दाल्भ्यकृतप्रश्नानां शिलकाभिहितोत्तराणि )*

**हन्ताहमेतद् भगवतो वेदानीति विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकं सामाभिसंस्थापयामः प्रतिष्ठासंस्तावं हि सामेति ।**

*( प्रवाहणस्याऽशयः )*

**तं ह प्रवाहणो जैबिलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद् भगवतो वेदानीति विद्धीति होवाच ॥ ५ ॥**

एवं प्रत्याख्यातो दाल्भ्यो वक्ति – **हन्तेति** ॥ भगवत्तोऽहमेतद् वेदानि स्वर्गलोकगतिं जानीयामिति दाल्भ्य उवाचेत्यर्थः । एवमुक्तः शिलक आह – **विद्धीति होवाचेति** ॥ दाल्भ्यः पृच्छति – **अमुष्येति** ॥

स्वर्गलोकमानिनः शिवस्येत्यर्थः । उत्तरम् – **अयं लोक इति** ॥ पृथिवी-लोकमानी ब्रह्मेत्यर्थः । **अस्य लोकस्य** चतुर्मुखस्य । प्रतिष्ठां लोकं भूलोकमानिब्रह्माणम् । **अन्तवद् वै** अपर्यवसितं वै ॥ ५ ॥

॥ इति अष्टमः खण्डः ॥

## अथ नवमः खण्डः

*( उद्गीथनामकभगवानेव सर्वोत्तमः )*

**अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनन्तः ॥ १ ॥**

शालावत्यः पृच्छति – **अस्य लोकस्येति** ॥ आसमन्तात् काशते दीप्यते इत्याकाशो विष्णुः इत्युवाच ह । तस्य महिमानमाह – **सर्वाणी-ति** ॥ इमानि प्रमाणप्रमितानि सर्वाणि ब्रह्मादिभूतानि आकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति, तेन प्रविलीयन्त इति यावत् । एभ्यः सर्वभूतेभ्यः परायणं मुख्याश्रयः । सर्वभूतानामित्यनुषङ्गः । स एष आकाशः परोवरीयान् परमवरीयान् । यद्वा,

**'परस्मादुत्तमं प्रोक्तं परो इति ततः परम् ।**
**परोवरं परं तस्मात् प्रोक्तं पारोवरीयकम् ॥'**

इत्युत्तराध्याये वक्ष्यमाणदिशा उत्तमोत्तम इत्यर्थः । उद्गीथः उच्चत्वेन गीतत्वाद् उद्गीथः स एषोऽनन्तो देशकालगुणैरपरिच्छिन्नः । तदाह सूत्रे– **'आकाशस्तल्लिङ्गात्'** (ब्र.सू. १-१-२२) इति ॥ १ ॥

*( हरिसर्वोत्तमत्वज्ञानफलम् )*

**परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतमेवं विद्वान् परोवरीयांसमुद्गीथमुपास्ते तं हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति तथाऽमुष्मिँल्लोके लोक इति स य एतमेवं विद्वानुपास्ते परोवरीय एवास्यास्मिँल्लोके जीवनं भविष्यति तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति ॥ २ ॥**

एतज्ज्ञानिनः फलमाह – **परोवरीय इति** ॥ योऽधिकारी एतं परोवरीयांसमुद्गीथं हरिमेवं ब्रह्मादिगतित्वाद्युक्तप्रकारेण विद्वान् जानन् उपास्ते परोवरीयोऽस्य वेदिनो रक्षको भवति । परोवरीयसो ह लोकानुत्तमोत्तमलोकान् विष्णुलोकान् जयति उ प्राप्नोत्येव । तमेतमाकाशनामकमुद्गीथं विष्णुं शुनकपुत्रोऽतिधन्वनामा मुनिः उदरशाण्डिल्याय मुनये उक्त्वा फलमुवाच । तदाह – **यावत्त इति** ॥ एनमुद्गीथं प्रजायां साधुवर्गे वेदिष्यन्ते ज्ञास्यन्ति, त्रेतायुगे एभ्यो वेदितॄणाम् एषां यावत्तः यावत्कालं यावद्द्वापरादि तावत्कालमस्मिंल्लोके जीवनं भविष्यतीत्युवाचेत्यर्थः । न केवलमेतावत्, अमुष्मिन् परलोके च जीवनं भविष्यतीत्यनुषङ्गः । द्विरुक्तिर्हर्षातिशयात्, विद्यासमाप्तौ वा । एवमुद्गीथोपासकस्य फलमिति जानतोऽप्येवं फलमित्याह – **स य इति** ॥ एवं विद्वान् । उद्गीथोपासकस्यैवमुक्तरूपं फलमिति विद्वान् एतमुद्गीथमुपास्त इत्यर्थः ॥ २ ॥

**॥ इति नवमः खण्डः ॥**

## अथ दशमः खण्डः

*( उषस्तेर्वृत्तान्तः )*

**मटचीहतेषु कुरुष्वाटक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे ॥ १ ॥**

सामैकदेशप्रस्तावप्रतिहारोद्गीथनिष्ठां भगवदुपास्तिं वक्तुं तदर्थां काञ्चनाऽऽख्यायिकामाह – **मटचीत्यादिना** ॥ उषस्तिर्नामतः । चक्रमयनं यस्यासौ चाक्रायणः । रथचक्राश्रयेण प्रायस्तिष्ठतीति चाक्रायण इत्युक्तः । अन्नपानार्थं तत्र तत्र प्रद्रवन् प्रद्राणक इत्युक्तः । सः मटचीहतेषु स्थूलोपलशब्दिताभिर्मटचीभिर्हतेषु कुरुषु शिलावर्षहतेषु कुरुदेशस्थेषु, आटिक्या आसन्नयौवनया जायया सह इभ्यग्रामे धनिकग्रामे गजाधिपतिग्राम इति वा उवास । स उषस्तिः इभ्यं धनिकं इभाधिपतिं वा कुल्माषानारण्यमाषान् खादन्तं बिभिक्षे याचितवान् ॥ १ ॥

**तꣳहोवाच नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इत्येतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतꣳ स्यादिति होवाच न स्विदेतेऽप्युच्छिष्टा इति ॥ २ ॥**

तमुषस्तिमुवाच इभ्यः । किमिति ? ये मे भक्षणार्थमुपनिहिता इतोऽन्ये न विद्यन्ते यच्च यस्मात् तस्माद् दातुं न सन्तीत्युवाचेत्यन्वयः । तमिभ्यं उवाच ह किल उषस्तिः । एतेषां मध्ये कांश्चन मे देहीत्युवाच ह । तानस्मै उषस्तये प्रददाविभ्यः । तान् दत्वाऽनुपानं करपात्रस्थोदकपानं च कुर्वित्यवाच । हन्त हर्षे । इत्युक्तः प्रत्युवाच उषस्तिः । एतदुदकपाने उच्छिष्टां मे मया पीतं स्यादतो न पिबेयमिति होवाच । इभ्यो वक्ति । न स्विदेते कुल्माषा उच्छिष्टा इति । स्विदिति काकुः । उच्छिष्टा भवन्ति

खल्वित्युवाच इभ्य इत्यर्थः ॥ २ ॥

**न वा अजीविष्यमिमान् अखादन्निति होवाच कामो म उदपानमिति स ह खादित्वाऽतिशेषान् जायाया आजहार साऽग्र एव सुभिक्षा बभूव तान् प्रतिगृह्य निदधौ स ह प्रातः सञ्जिहान उवाच यद् बतान्नस्य लभेमहि लभेमहि धनमात्रां राजाऽसौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ३ ॥**

-प्राणात्ययसमये उच्छिष्टत्वविचारो ज्ञानिनो न कार्य इति भावेनाऽह– **न वा इति ॥** इमान् त्वदुच्छिष्टान् अखादन् नवै नैव जीविष्यम् इति होवाच उषस्तिः । उदपानं तु मे कामः इच्छानुसारि, सर्वत्र वर्षणोदकसौलभ्यादित्युवाच उषस्तिः । तदाह सूत्रे – '**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्**' (ब्र.सू.३.४.२८) इति । स होषस्तिः खादित्वाऽतिशेषान् शिष्टान् जायायै आजहार आहृतवान् । सा जायाऽग्र एव प्रागेव सुभिक्षा याञ्चया क्षुन्निवृत्तिमती बभूव । अतः तान् पत्युर्हस्तात् प्रतिगृह्य निदधौ सङ्ग्रहं चकार । स होषस्तिः सञ्जिहानः शयनादुत्तिष्ठन् उवाच भार्यां प्रतीति शेषः । तदाह । बत खेदे । अन्नस्य मात्रामल्पं वा लभेमहि चेत् तद् भुक्त्वा जीवन्तो धनस्य मात्रां भारं लभेमहि । यद् यस्मादसौ राजा यक्ष्यते यागं करिष्यति । स मा मां सर्वैरार्त्विज्यैः सर्वर्त्विक्कर्मभिर्वृणीतेत्युवाचेत्यन्वयः ॥ ३ ॥

**तं जायोवाच हन्त पत इम एव कुल्माषा इति तान् खादित्वाऽमुं यज्ञं विततमेयाय तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोप विवेश स ह प्रस्तोतारमुवाच प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीत्येवमेवोद्गातार-मुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा**

**ते विपतिष्यतीत्येवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासाञ्चक्रिरे ॥ ४ ॥**

तमेवमुक्तवन्तं पतिं प्रति जायोवाच । हन्त हर्षे । हे पते इम एव कुल्माषा इति पूर्वेद्युर्निहितान् प्रदर्श्योवाचेत्यर्थः । तान् खादित्वा अमुष्य यज्ञं विततं विस्तृतम् एयाय जगाम । तत्र यज्ञे आस्तावे आस्तावाख्ये कर्मणि स्तोष्यमाणान् उद्गातॄन् उपोपविवेश समीपे उपविष्टवान् । उपविष्टः स मुनिः प्रस्तोतारमुवाच । तदाह – हे प्रस्तोतः ! या देवता प्रस्तावं प्रस्तावाक्षरमन्वायत्ताऽधिष्ठायाऽस्ते तां चेद् देवतामविद्वान् प्रस्तोष्यसि ते मूर्धा विपतिष्यतीति प्रस्तोतारमुवाचेत्यर्थः । एवमेवोद्गातारमुवाचेत्येतद् व्यनक्ति – **उद्गातरिति** ॥ उद्गीथं सामभक्तिम् । एवमेव प्रतिहर्तारमुवाचेत्युक्तं व्यनक्ति – **प्रतिहर्तरिति** ॥ प्रतिहारं सामभक्तिरूपाक्षम् । प्रतिहरिष्यसि प्रतिहाराक्षरं वक्ष्यसि । ते ह प्रस्तोत्रादयः समारताः स्वस्वकर्मभ्यो निवृत्तास्तूष्णीमासाञ्चक्रिरे तूष्णीमासन् ॥ ४ ॥ १० ॥

**॥ इति दशमः खण्डः ॥**

**अथ एकादशः खण्डः**

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैशिषं भगवतो वा अहमवित्त्याऽन्यानवृषि भगवांस्त्वेव मे सर्वैरार्त्विज्यैरिति ॥ १ ॥

यदर्थमाख्यायिकोक्ता तामुपास्तिमिदानीमाह – **अथ हैनमिति** ॥

अथानन्तरमेनमुषस्तिं यजमानो राजोवाच । भगवन्तं पूज्यं त्वामहं विविदिषाणि किन्नामा भवानिति वेदितुमिच्छामीत्युवाचेत्यन्वयः । मुनिराह– **उषस्तिरित्यादि** ॥ राजाऽऽह– भगवन्तं त्वामहमेतैः सर्वैरार्त्विज्यैः ऋत्विक्कर्मभिः वरीतुं पर्येषिषम् अन्वेषितवानस्मि । भगवतो गतेरवित्त्या अज्ञानेन अन्यानवृषि वृतवानासम् । इदानीं तु भगवान् स्वोचितज्ञानादिमान् भवानेव सर्वैरार्त्विज्यैर्मे वृत इत्युवाच राजेत्यर्थः ॥ १ ॥

**तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवन्तां यावत् तेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥ २ ॥**

॥ **तथेतीति** ॥ तथाऽस्त्वित्युक्त्वा मुनिः पुनरुवाच । तर्हि एवं हि सति अथ सर्वार्त्विज्यस्य मदीयत्वात् मदतिसृष्टा मदनुज्ञाताः सन्तः एत एव त्वया पूर्वं वृता एव स्तुवन्तां स्तुवन्तु । किन्तु यावदेतेभ्यो धनं दद्याः तावन्मे दद्याः देहीत्युवाच मुनिरित्यर्थः । तथेति ह यजमान उवाच, तावद्धनं दास्यामीत्युवाचेत्यर्थः ॥ २ ॥

**अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति ॥ ३ ॥**

एवमनुज्ञाता ऋत्विजो मूर्धपातपरिहाराय प्रस्तावादिदेवताज्ञानाय तं मुनिमुपसृत्य क्रमेण पृष्ट्वा देवतां व्यज्ञासिषुरित्याह – **अथ हैनं प्रस्तोतेत्यादिना** ॥ मा मां भगवान् पूज्यो भवानवोचत् इति प्रश्नेनोपससादेत्यन्वयः ॥ ३ ॥

**प्राण इति होवाच सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां**

**चेदविद्वान् प्रस्तोष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति ॥ ४ ॥**

इति पृष्टो मुनिरुक्तवानित्याह – **प्राण इति होवाचेति ॥** प्राणनामा मुख्यप्राणान्तर्यामी प्रस्तावदेवतेत्युवाचेत्यर्थः । प्राणस्य प्रस्तावदेवतात्वं जनिरूपप्रस्तावशब्दार्थोक्त्या समर्थयते – **सर्वाणीति ॥** भूतानि जीवजातानि प्राणमेवाभिसंविशन्ति सुप्तौ प्रलये च प्रविशन्ति प्राणमभ्युज्जिहते । प्राणान्निःस्सरन्ति उत्पद्यन्ते सृष्टिकाले, सैषा भूतोत्पत्तिलयहेतुभूता प्राणाख्यदेवता प्रस्तावमन्वायत्ता, तां चेदविद्वान् प्रास्तोष्यः प्रस्तावाक्षरमवोचः तर्हि मया तथोक्तस्य मूर्धा ते विपतिष्यतीत्युक्तस्य ते मूर्धा व्यपतिष्यद् इत्युवाच मुनिरित्यर्थः । एवमुपरितनवाक्येऽप्यर्थो ध्येयः ॥ ४ ॥

**अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेत्यादित्य इति होवाच सर्वाणि हवा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेत्यथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेत्यन्नमिति होवाच ॥ ५ ॥**

आदित्यः आदित्यस्थः आदित्यनामा हरिः । तस्योद्गीथदेवतात्वमुद्गीथशब्दार्थोक्त्या साधयति – **सर्वाणीत्यादिना ॥** आदित्यमादित्यस्थमुच्चैः सन्तं सर्वोत्तमत्वेन स्थितम् अन्नम् अद्यमानवस्तुगतोऽन्ननामा

हरिः ॥ ५ ॥

**सर्वाणि हवा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति तथोक्तस्य मयेति ॥ ६ ॥ ११ ॥**

अन्ननाम्नो हरेः प्रतिहारदेवतात्वं भोजनरूपप्रतिहारशब्दार्थ-व्युत्पादनेन समर्थयते – **सर्वाणि हेत्यादिना** ॥ प्रतिहरमाणानि भुञ्जानानि जीवन्ति द्विरुक्तिराख्यायिकापूर्वमुक्तविद्यासमाप्त्यर्था ॥ ६ ॥ ११ ॥

**॥ इति एकादशः खण्डः ॥**

**अथ द्वादशः खण्डः**

*( शौवोद्गीथोपासना )*

**अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायत्वशनायाम वा इति ॥ १ ॥**

पूर्वत्रोद्गीथोपासकस्य पापाविद्धत्वं मुक्तावानन्दातिशयः बहुपुत्रोप-लक्षितेष्टान्नपानादि च फलान्युक्तानि । तत्रोद्गीथमुपास्य स्वाभीष्टं प्राप्ताः सन्ति किम् ? इत्यतः सन्तीत्याख्यायिकयाऽऽह – **अथात इति** ॥ अथ विद्यान्तरम् । अत उद्गीथोपासनया फलवन्तः सन्ति किमिति पृष्टत्वात् तत्परिहाराय शौवोद्गीथरूपविद्यान्तरमाख्यायिकयोच्यत इत्यर्थः । शुनो-क्तः श्वभिरनुष्ठितः शौव उद्गीथः उच्यत इत्यर्थः । दल्भ्यपुत्रो दाल्भ्यः बकनामा मुनिः मित्रया पुत्रार्थमाहूतो ग्लाववत् तूष्णीं स्थितत्वाद्

ग्लावनामा मित्राहूतत्वान्मैत्रेय इत्युक्तः स्वाध्यायमुद्दिश्योद्व्राज क्वचिज्जगाम । तस्यानुग्रहार्थं वायुः श्वा श्वरूपः सन् श्वेतः श्वरूपैः रुद्रादिभिरितो युक्तः सन् प्रादुर्बभूव । तं श्वरूपं वायुमन्ये श्वरूपा रुद्रादयो देवा उपसमेत्य समीपं प्राप्य ऊचुः । किमिति ? नोऽस्माकं अन्नमुद्दिश्य भगवान् ज्ञानादिसम्पन्नो भवानागायतु अशनायाम वै अशनमिच्छाम वै, इत्यूचुरित्यर्थः ॥ १ ॥

**तान् होवाचेहैव मा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः सꣳरब्धाः सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिङ्चक्रुरो३मदा३मोंपिबा३मों देवो वरुणः प्रजापतिः सविता३-न्नमिहा३हरदन्नपते३न्नमिहा३हराऽहरोमिति ॥ २ ॥ १२ ॥**

तान् श्वरूपरुद्रादीनुवाच श्वरूपो वायुः । इहैवास्मिन्नेव स्थले श्वः प्रातःकाले मा मां समायात समागच्छतेति एतच्छुनोक्तं श्रुत्वा बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार प्रातःकालं प्रतीक्ष्य तस्थावित्यर्थः । ते ह एवमुक्ता अन्ये श्वरूपा देवाः यथैवेदं निदर्शनं बहिष्पवमानेन स्तोष्यमाणा ऋत्विजः संरब्धा संरम्भवन्तः अन्योन्यं कच्छग्रहणेन संरब्धाः पिपीलिकापङ्क्त्याकारेण सर्पन्त्येवमाससृपुः, पूर्वेद्यु-र्निर्दिष्टस्थले प्रसर्पितवन्तः । ते ह एवमुपसृप्तास्ते श्वानः समुपविश्य हिङ्चक्रुः हिमित्यूचुः । हिङ्कृत्य च ओं हे मुख्यप्राणान्तर्गतभगवन्नन्न-मदाम । ओं भगवन् पिबामोदकम् । देवः गत्यर्थत्वाद् दीव्यतेः यथायोगं सर्वज्ञो हरिः मुख्यवायुर्वरणीयत्वाद् वरुणो हरिः वायुश्च । प्रजानां पतित्वात् प्रजापतिः हरिर्वायुश्च । जगत्प्रसवितृत्वात् सवितेत्युक्तो हरिर्वायुश्चान्नमिहास्मास्वाहरत् आनयतु, अन्नपते ! हरे वायो

अन्नमिहाऽहराऽहरोमिति मन्त्रं जप्तवन्तः । ततश्चाभीष्टं प्राप्तवन्त इत्यपि ध्येयम् ॥ २ ॥ १२ ॥

**॥ इति द्वादशः खण्डः ॥**

**अथ त्रयोदशः खण्डः**

*( स्तोभाक्षरेषु देवतोपासना )*

**अयं वाव लोको हावुकारो वायुर्हायिकारश्चन्द्रमा अथकार आत्मेहकारोऽग्निरीकारः आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोयिकारः प्रजापतिर्हिङ्कारः प्राणः स्वरोऽन्नं याया वाग् विराडनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुप्कारो दुग्धेऽस्मै वाग् दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद इति ॥ १ ॥ १३ ॥**

**॥ इति श्रीमच्छान्दोग्योपनिषदि प्रथमोऽध्ययः ॥ १ ॥**

सामैकदेशोपास्तेः प्रकृतत्वात् तदेकदेशभूतहाव्वित्यादित्रयोदश-स्तोभाक्षरनिष्ठोपास्तिमाह – **अयमित्यादिना** ॥ अयं लोकः पृथिवी-लोकः तन्मानिनी धरादेवी, हूयते अत्राग्निहोत्रादिकमिति हावु हावु इत्याक्रियत इति हावुकार इत्युपासीतेति सर्वत्र ध्येयम् । हावुकारस्तोभो रथन्तरसाम्नि प्रसिद्धः । एवमन्येऽपि हायिकारादयो वामदेवादिसामसु प्रसिद्धाः । वायुराश्चर्यवदायातीति वा हेति सुखमस्मादायातीति वा हायिकारो वायुः । चन्द्रमाः सूर्यानन्तरप्रकाश इत्यथकारः । आत्मा व्याप्तो नारायणः सर्वसामीप्यादिहकार उक्तः । अग्निः सदेन्धनादीकारः । सूर्यः उष्टितः आतपदाहादादित्य ऊकारः । नितरामाह्वयन्त्येनमिति निहव

इन्द्रः, एतीत्येकारो विश्वेदेवाः, सर्वे सुराः औहोयिकार उक्ताः । कथम् ? उच्चत्वादुर्विष्णुः तस्य सप्तमी औ इति , तस्मिन् विष्णौ हूयन्ते स्थाप्यन्ते मुक्तााविति व्युत्पत्त्या औहोयिनः । तथाऽऽक्रियन्त इत्यौहोयिकार इति ध्येयम् । प्रजापतिर्ब्रह्मा निश्चयज्ञानवत्त्वाद्धिङ्कारः । प्राणः शरीरस्थो मुख्यप्राणः स्वे विष्णौ रमयत्येनं जीवमिति स्वरः । **अन्नं**, अत्रा भक्षकेण वायुना नीयत इत्यन्नमित्युक्तान्नदेवता सरस्वती **याया** नित्यं गति-मत्त्वहेतुना ययिरित्युक्तं वायुं गतेति हेतोर्याया । वाक् सर्ववागात्मिका श्रीः विशेषेण राजनाद् विराट् स्तोभदेवता । अनिरुक्तः साकल्येन निर्वचनायोग्यः सम्यक् चरतीति सञ्चरो हरिः आहूत एव पातीति हुप् हुबित्याक्रियत इति हुप्कारः । त्रयोदशस्तोभदेवता इत्युपासीतेति सर्वत्र ध्येयम् । एतदुपास्तिफलमाह– **दुग्ध इति** ॥ योऽधिकारी साम्नां सामभक्तिभूतस्तोभाक्षराणामेतामुक्तविधामुपनिषदं रहस्यप्रतिपाद्यं वेद, अस्मै वेदिने यो वाचो दोहस्तं वाग्दोहं वेदादिवाग्लभ्यं फलं दुग्धे क्षरति उपासनमिति योज्यम् । यद्वा , यो वाचो दोहस्तं दोहं वाग् वाचिस्थो वाङ्नामा हरिः दुग्धे इति । द्विरुक्तिः समाप्त्यर्था ॥ १३ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते प्रथमोऽध्यायः समाप्तः ॥ १ ॥

अन्नमिहाऽहराऽहरोमिति मन्त्रं जप्तवन्तः । ततश्चाभीष्टं प्राप्तवन्त इत्यपि ध्येयम् ॥ २ ॥ १२ ॥

**॥ इति द्वादशः खण्डः ॥**

**अथ त्रयोदशः खण्डः**

*( स्तोभाक्षरेषु देवतोपासना )*

**अयं वाव लोको हावुकारो वायुर्हायिकारश्चन्द्रमा अथकार आत्मेहकारोऽग्निरीकारः आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोयिकारः प्रजापतिर्हिङ्कारः प्राणः स्वरोऽन्नं याया वाग् विराडनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुप्कारो दुग्धेऽस्मै वाग् दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद इति ॥ १ ॥ १३ ॥**

**॥ इति श्रीमच्छान्दोग्योपनिषदि प्रथमोऽध्ययः ॥ १ ॥**

सामैकदेशोपास्तेः प्रकृतत्वात् तदेकदेशभूतहाव्वित्यादित्रयोदश-स्तोभाक्षरनिष्ठोपास्तिमाह – **अयमित्यादिना** ॥ अयं लोकः पृथिवी-लोकः तन्मानिनी धरादेवी, हूयते अत्राग्निहोत्रादिकमिति हावु हावु इत्याक्रियत इति हावुकार इत्युपासीतेति सर्वत्र ध्येयम् । हावुकारस्तोभो रथन्तरसाम्नि प्रसिद्धः । एवमन्येऽपि हायिकारादयो वामदेवादिसामसु प्रसिद्धाः । वायुराश्चर्यवदायातीति वा हेति सुखमस्मादायातीति वा हायिकारो वायुः । चन्द्रमाः सूर्यानन्तरप्रकाश इत्यथकारः । आत्मा व्याप्तो नारायणः सर्वसामीप्यादिहकार उक्तः । अग्निः सदेन्धनादीकारः । सूर्यः उष्टितः आतपदाहादादित्य ऊकारः । नितरामाह्वयन्त्येनमिति निहव

इन्द्रः, एतीत्येकारो विश्वेदेवाः, सर्वे सुराः औहोयिकार उक्ताः । कथम् ? उच्चत्वादुर्विष्णुः तस्य सप्तमी औ इति , तस्मिन् विष्णौ हूयन्ते स्थाप्यन्ते मुक्ताविति व्युत्पत्त्या औहोयिनः । तथाऽऽक्रियन्त इत्यौहोयिकार इति ध्येयम् । प्रजापतिर्ब्रह्मा निश्चयज्ञानवत्त्वाद्धिङ्कारः । प्राणः शरीरस्थो मुख्यप्राणः स्वे विष्णौ रमयत्येनं जीवमिति स्वरः । **अन्नं**, अत्रा भक्षकेण वायुना नीयत इत्यन्नमित्युक्तान्नदेवता सरस्वती **याया** नित्यं गतिमत्त्वहेतुना ययिरित्युक्तं वायुं गतेति हेतोर्याया । वाक् सर्ववागात्मिका श्रीः विशेषेण राजनाद् विराट् स्तोभदेवता । अनिरुक्तः साकल्येन निर्वचनायोग्यः सम्यक् चरतीति सञ्चरो हरिः आहूत एव पातीति हुप् हुबित्याक्रियत इति हुप्कारः । त्रयोदशस्तोभदेवता इत्युपासीतेति सर्वत्र ध्येयम् । एतदुपास्तिफलमाह– **दुग्ध इति ॥** योऽधिकारी साम्नां सामभक्तिभूतस्तोभाक्षराणामेतामुक्तविधामुपनिषदं रहस्यप्रतिपाद्यं वेद, अस्मै वेदिने यो वाचो दोहस्तं वाग्दोहं वेदादिवाग्लभ्यं फलं दुग्धे क्षरति उपासनमिति योज्यम् । यद्वा , यो वाचो दोहस्तं दोहं वाग् वाचिस्थो वाङ्नामा हरिः दुग्धे इति । द्विरुक्तिः समाप्त्यर्था ॥ १३ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते प्रथमोऽध्यायः समाप्तः ॥ १ ॥

## अथ श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते द्वितीयाध्याये प्रथमः खण्डः

*( साधुसामपदयोः समानार्थकत्वम् )*

॥ हरिः ॐ ॥

**ॐ समस्तस्य खलु साम्न उपासनं साधु यत् खलु साधु तत् सामेत्यचक्षते यदसाधु तदसामेति ॥ १ ॥**

ओं ॥ सामैकदेशोद्गीथस्तोभनिष्ठामुपास्तिमुक्त्वा पञ्चभक्तिकसप्तभक्तिकसमस्तसामनिष्ठामुपास्तिमाह द्वितीयाध्यायेन । समस्तस्य पूर्णस्य साम्नः सामनाम्नः समग्रभक्तिसहितसामप्रतिपाद्यस्य हरेरुपासनं कार्यमिति शेषः । कुतः ? यतः साम साधु अत इति योजना । कुतः साम साधु ? इत्यतः साम्नः साधुत्वं वृद्धसम्मत्याऽऽह – **यदिति** ॥ यत् खलु सारत्वेन धार्यं तदेव हि सारत्वेन मेयं सामेति साम साध्विति एक एवार्थ इत्याचक्षते वृद्धाः । तत्र व्यतिरेकं चाऽह – **यदिति** ॥ यदसाधु सारत्वेनाधार्यं तत् सारत्वेन न मेयमित्याचक्षते इति पूर्वेणान्वयः ॥ १ ॥

**तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥**

तेऽपि वा किं बलादेवमाहुरित्यतो वृद्धान्तराणां साधौ सामशब्दप्रयोगादित्याह– **तदुताप्याहुरिति** ॥ तत् सामसाधुशब्दयोरेकार्थतामुताप्याहुः वक्ष्यमाणदिशाऽप्याहुर्वृद्धाः । कथम् ? साम्ना एनं बुद्धिस्थं राजगुर्वादिकमुपागात् प्राप्नोदिति यल्लोके साधुनैनमुपागादित्येव तदाहुः । असाम्नेत्यादिना व्यतिरेकोक्तिः ॥ २ ॥

**अथोताप्याहुः साम नो बतेति यत् साधु भवति साधु बतेत्येव**

**तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥ ३ ॥**

तेऽपि वृद्धाः किं बलादेवमाहुरित्यतो वृद्धान्तराणां साधौ सामशब्दप्रयोगदृष्टेरित्याह – **अथोताप्याहुरिति** ॥ अन्येऽपि वृद्धा आहुरित्यर्थः । कथम् ? यत् साधु भवति तत् नोऽस्माकं साम । बत हर्षे । तस्यार्थोक्तिः – **साधु नो बतेत्येव तदाहुरार्या इति** ॥ उक्तमेव व्यतिरेकेणाऽऽह – **असाम नो बतेति** ॥ यदसाधु भवति तत् नोऽस्माकं असाधु बतेति तस्य व्याख्यानम् ॥ ३ ॥

**स य एतदेवंविद्वान् साधु सामेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥ ४ ॥**

असाधु बतेत्येव तदाहुरिति ज्ञानिनः फलमाह– **स य इति** ॥ स प्रसिद्धो योऽधिकारी एवं सारत्वेन धार्यं साधु सारत्वेन सर्वसामभिर्मेयं सामेत्येवं प्रकारेणैतत् साधुसामशब्दयोरेकार्थत्वं विद्वान् जानन् साधु सामेत्युपास्ते एनं समस्तसामप्रतिपाद्यतया भगवदुपासकं यद् ये साधवो धर्माः ते अभ्याशः समीप एव शीघ्रमिति यावत्, आगच्छेयुश्च मुक्तौ प्राप्नुयुः उपनमेयुश्च स्थिराश्च भवन्ति । चशब्दावन्योन्यसमुच्चये ॥ ४ ॥ १ ॥

॥ इति प्रथमः खण्डः ॥

अथ द्वितीयः खण्डः

*( लोकेषु भगवदुपासना )*

**लोकेषु पञ्चविधꣳ सामोपासीत पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥**

लोकेषु पञ्चभक्तिकसामप्रतिपाद्यभगवत उपास्तिमाह – **लोकेष्विति ॥** लोकेषु पृथिव्यादिषु पञ्चविधं पञ्चरूपभेदेन पञ्चविधतया स्थितं साम सारत्वेन मेयं भगवन्तं पञ्चभक्तिभेदेन पञ्चविधसामप्रतिपाद्यं पृथिव्यादिषु लोकेषु पञ्चसु स्थितमुपासीतेत्यर्थः । तत् क्रमेण व्यनक्ति – **पृथिवीति ॥** सस्यादेः प्रथनाद् विस्तारात् पृथिवीनामा पृथिवीस्थः प्रद्युम्नो हिङ्कारः । हिमित्याक्रियत इति हिङ्काररूपसामभक्तिप्रतिपाद्य इत्यर्थः । एवमग्रेऽपि । अग्निः अदनहेतुनाऽग्निनामाऽग्निस्थो वासुदेवः प्रस्तावः प्रस्तावाख्यसाम-भक्तिप्रतिपाद्यः । अन्तरीक्ष्यत इति वा व्यवधानाभावहेतुना वाऽन्त-रिक्षनामाऽन्तरिक्षगो नारायणः उद्गीथः वासुदेवादिमूर्त्युद्गमनहेतुनोद्गीथा-ख्यसामभक्त्यर्थः । आयूंष्यादत्त इत्यादित्यनामाऽदित्यस्थोऽनिरुद्धः प्रतिहारः इदं जगत् स्वस्वकार्येषु प्रतिहरति नयतीति प्रतिहाराख्य-सामभक्तिवेद्यः । द्यौः क्रीडाहेतुत्वाद् द्यौरित्युक्तो द्युलोकस्थः सङ्कर्षणो निधनं निधनशब्दितसंहृतिहेतुना निधनाख्यसामभक्तिवेद्यः इत्यूर्ध्वेषू-पर्युपरिस्थितलोकस्थभगवन्मूर्तीनां हिङ्कारादिसामभक्त्यर्थतयोपासन-मुक्तमित्यर्थः ॥ १ ॥

**अथाऽवृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम्** ॥ २ ॥

अथानन्तरमावृत्तेषु द्युप्रभृतिषु पृथिव्यन्तेषु स्थितरूपाणां हिङ्कारादि-सामभक्त्यर्थतयोपासनाप्रकार उच्यत इत्यर्थः । तदाह क्रमेण **द्यौरित्या-दिना ॥** पदानां प्रागुक्त एवावयवार्थो ध्येयः । द्यौः द्युस्थः प्रद्युम्नो हिङ्कारः, आदित्यो वासुदेवः प्रस्तावः, अन्तरिक्षो नारायण उद्गीथः, अग्निः अनिरुद्धः प्रतिहारः, पृथिवी सङ्कर्षणो निधनम् । नचैतद् विरुद्धम् '**न स्थानतोऽपि परस्योभयलिङ्गम्**' (ब्र.सू. ३-२-२१) इत्यत्रोक्तदिशा

सर्वरूपाणां समस्तगुणपूर्णत्वात् । शक्तिव्यक्त्यात्मना नानागुणव्यवस्थोपपत्तेः । **'प्राप्तेश्च समञ्जसम्'** (ब्र.सू.३-३-१०) इति सूत्रोक्तदिशोपासकाधिकारिभेदेनाविरोधसम्भवाच्चेति भावः ॥ २ ॥

**कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽवृत्ताश्च य एतदेवं विद्वाँल्लोकेषु पञ्चविधꣳ सामोपास्ते ॥ ३ ॥**

फलमाह– **कल्पन्ते हेति ॥** योऽधिकारी एतत् पञ्चभक्तिकसामप्रतिपाद्यम् एवमुक्तगुणविशिष्टतयोर्ध्वाधोलोकेषु स्थितत्वप्रकारेण विद्वान् जानन् लोकेषु पञ्चविधं साम भगवन्तमुपास्ते अस्मै ऊर्ध्वाश्चाऽवृत्ताश्च लोका ऊर्ध्वाधोलोकगाः भगवन्मूर्तयः मोक्षादिपुमर्थं कल्पन्ते कल्पयन्तीत्यर्थः ॥ ३ ॥ २ ॥

**॥ इति द्वितीयः खण्डः ॥**

**अथ तृतीयः खण्डः**

*( वृष्टौ भगवदुपासना )*

**वृष्टौ पञ्चविधꣳ सामोपासीत पुरोवातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥ १ ॥**

॥ **वृष्टाविति** ॥ वृष्टिप्रभृतिषु स्थितं पञ्चरूपात्मकं साम हरिं पञ्चभक्तिकसामप्रतिपाद्यमुपासीत । तद् व्यनक्ति – **पुरोवात इति** ॥ पुरोवातस्थः प्रद्युम्नो हिङ्कारः । पूर्ववदर्थो ध्येयः । मेघो जायते मिलितो मेघ इत्यर्थः । मिलितमेघस्थो वासुदेवः प्रस्तावः । वर्षति धारासम्पातस्थः नारायणः उद्गीथः । विद्योतते स्तनयति गर्जति विद्युद्गर्जनगतोऽनिरुद्धः प्रतिहारः ॥ १ ॥

*( वृष्टौ भगवदुपासकस्य फलकथनम् )*

**उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधꣳ सामोपास्ते ॥ २ ॥ ३ ॥**

उद्गृह्णाति वृष्टिमुपसंहरति वृष्ट्युपसंहारस्थः सङ्कर्षणो निधनम् । ज्ञानिनः फलमाह– योऽधिकारी एतत् पञ्चभक्तिसामप्रतिपाद्यम् एवं उक्तगुणविशिष्टतया वृष्ट्यादिपञ्चस्थानगतत्वेन विद्वान् वृष्टौ वृष्ट्यादौ पञ्चविधं साम भगवन्तमुपास्ते अस्मै ज्ञानिने वर्षति वर्षणादिगतो हरिः वर्षत्यभीष्टं वर्षयति चेत्यर्थः ॥ २ ॥ ३ ॥

॥ इति तृतीयः खण्डः ॥

**अथ चतुर्थः खण्डः**

*( अप्सु भगवदुपासना )*

**सर्वास्वप्सु पञ्चविधꣳ सामोपासीत मेघो यत् सम्प्लवते स हिङ्कारो यद् वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ॥ १ ॥**

अन्यत्रापि पञ्चविधस्य हरेरुपास्तिमाह – **सर्वास्विति** ॥ सर्वास्वप्सु पञ्चधा स्थितास्वप्सु स्थितं पञ्चविधं पञ्चरूपं साम भगवन्तं पञ्चभक्तिकसामवेद्यमुपासीत । सम्प्लवते सञ्चरति सञ्चरन्मेघस्थः प्रद्युम्नो हिङ्कारः । यद् वर्षति यद् वर्षणं वर्षणस्थो वासुदेवः प्रस्तावः । याः प्राच्यः प्राङ्मुख्यः स्यन्दन्ते प्रवहन्ति प्राक्प्रवहन्नदीस्थो नारायणः उद्गीथः । या नद्यः प्रतीच्यः पश्चिममुख्यः स्यन्दन्ते तत्स्थोऽनिरुद्धः प्रतिहारः । समुद्रः समुद्रस्थः सङ्कर्षणो निधनम् ॥ १ ॥

*( अप्सु भगवदुपासकस्य फलकथनम् )*

**न हाप्सु प्रैत्यप्सुमान् भवति य एतदेवंविद्वान् सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते ॥ २ ॥**

फलमाह – **न हेति** ॥ योऽधिकारी एतत् पञ्चविधसामभक्तिवेद्यमेवमुक्तगुणविशिष्टत्वेन विद्वान् सर्वास्वप्सु पञ्चविधं पञ्चरूपं साम हरिमुपास्ते स इति शेषः । न ह अप्सु प्रैति म्रियते । अप्सुमान् भवति मध्यमपदलोपेन अप्सुस्थितविष्णुमान् भवतीति वा, अपः सूत इत्यप्सूर्भगवान्, स एव दीर्घलोपेनाप्सुः तद्वान् भवतीति वाऽर्थः, मुक्तो भवतीति यावत् ॥ २ ॥ **इति चतुर्थः खण्डः ॥**

## अथ पञ्चमः खण्डः

*( ऋतुषु भगवदुपासना )*

**ऋतुषु पञ्चविधꣳ सामोपासीत वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनम् ॥ १ ॥**

॥ **ऋतुष्विति** ॥ ऋतुषु हेमन्तशिशिरयोरैक्यविवक्षया पञ्चस्वृतुषु स्थितं ऋतत्वात् सर्वशास्त्रावगतत्वाद् ऋतुनामकं पञ्चरूपं साम हरिं पञ्चसामभक्तिप्रतिपाद्यमुपासीत । तद् व्यनक्ति – **वसन्त इति** ॥ वसन्तस्थो वसन्तनामा प्रद्युम्नः हिङ्कार इत्यादि पूर्ववज्ज्ञेयम् । वसन्तादिशब्दनिरुक्तिर्भाष्ये[१] ॥ १ ॥

*( ऋतुषु भगवदुपासकस्य फलकथनम् )*

**कल्पन्ते हास्मै ऋतव ऋतुमान् भवति य एतदेवं विद्वान् ऋतुषु**

१. 'वासस्य सुखकारित्वाद् वसन्तः पुरुषोत्तमः ।
नीरादेर्गरणाद् ग्रीष्मो वर्षणाद् वर्ष उच्यते ।
शं रातीति शरत् प्रोक्तो हेमन्तो हिमकारणात् ।' इति च । (छा. उ. भाष्यम्)

**पञ्चविधꣳ सामोपास्ते** ॥ २ ॥ ५ ॥

फलमाह – **कल्पन्त इति** ॥ य एतदित्यादि प्राग्वत् । अस्मै उपासकाय ऋतवो ऋतुगतः पञ्चरूपो भगवान् कल्पन्ते मोक्षादीन् दातुं शक्तो भवतीत्यर्थः । रूपबाहुल्याद् बहुवचनम् । ऋतुमान् रक्षकत्वेन ऋतुगत-विष्णुमान् भवतीत्यर्थः ॥ २ ॥ **इति पञ्चमः खण्डः** ॥

### अथ षष्ठः खण्डः

*( पशुषु भगवदुपासना )*

**पशुषु पञ्चविधꣳ सामोपासीताजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनं भवन्ति हास्य पशवः पशुमान् भवति य एतदेवं विद्वान् पशुषु पञ्चविधꣳ सामोपास्ते** ॥ १ ॥ ६ ॥

॥ **पशुष्विति** ॥ पाति सुखरूपश्चेति पशुनामा तं पञ्चविधपशुषु स्थितं पञ्चसामभक्तिप्रतिपाद्यं पञ्चरूपं साम हरिमुपासीतेति । उक्तं व्यनक्ति – **अजा इति** ॥ अजादिशब्दनिर्वचनं भाष्ये[१] । भवन्ति हास्य पशव इति प्रसिद्धपशव एव ज्ञेयाः । पशुमान् पशुस्थहरिमान् भवतीत्यर्थः ॥ ६॥

॥ **इति षष्ठः खण्डः** ॥

### अथ सप्तमः खण्डः

*( इन्द्रियेषु भगवदुपासना )*

---

१. 'यज्ञेनाञ्चनहेतुत्वादजस्थो भगवानजः ।
अविस्थस्त्वविरेवोक्त ऊर्णया शीततोऽवनात् ॥
गोश्च सद्गतिहेतुत्वाद् गोस्थः स पुरुषोत्तमः ।
अश्वश्चैवाऽशुगन्तृत्वात् पुरुषः पूर्तिहेतुतः ॥' इति च । (छा. उ. भाष्यम्)

**प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिङ्कारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीयांसि वैतानि परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतदेवं विद्वान् प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य ॥ ७ ॥**

॥ **प्राणेष्विति** ॥ **परोवरीयः** परस्मादुत्तमं परः, ततोऽप्युत्तमं परोवरं, ततोऽप्युत्तमं परोवरीयः – अत्युत्तमोत्तमोत्तमं साम हरिमित्यर्थः । प्राणः श्वासवायुस्थः प्रद्युम्नः । एतानि रूपाणि सर्वाण्यपि परोवरीयांसि । वै प्रसिद्धिः । अस्य वेदिनः परोवरीयो ब्रह्म भवति, रक्षकमित्यर्थः । उपसंहरति – **इति तु पञ्चविधस्येति** ॥ उपास्तिरुक्तेति शेषः ॥ ७ ॥

**॥ इति सप्तमः खण्डः ॥**

**अथ अष्टमः खण्डः**

*( वाक्येषु सप्तविधसामप्रतिपाद्यभगवदुपासना )*

**अथ सप्तविधस्य वाचि सप्तविधꣳ सामोपासीत यत्किञ्च वाचो हुमिति स हिङ्कारो यत् प्रेति स प्रस्तावो यदेति स आदिर्यदुदिति स उद्गीथो यत् प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनं दुग्धेऽस्मै वाग् दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान् वाचि सप्तविधꣳ सामोपास्ते ॥ १ ॥ ॥ ८॥**

अथानन्तरं सप्तविधस्य सप्तविधसामभक्तिवेद्यस्य सप्तरूपस्य हरेरुपास्तिरुच्यत इत्यर्थः । कुत्रेत्यतो वाचि तावदाह – **वाचीति** ॥ वाचि सप्तविधायां शब्दरूपायां स्थितं सप्तविधं सप्तरूपं सप्तविधवाक्प्रतिपाद्यं साम हरिमुपासीत । कथमित्यतो व्यनक्ति – **यत्किञ्चेति** ॥ वाचः शब्दस्य

हुमिति वाग्विशेषः, हुमित्यनेनोपक्रमे निबद्धं यद् वाक्यमिति यावत् । तद्वाक्यबोध्यो यः प्रद्युम्नः स हिमिति सामभक्तिप्रतिपाद्यः । यो हिङ्कारः प्रद्युम्नः स हुमिति शब्दोपबद्धवाक्यबोध्य इति वोद्देश्यविधेयभावो ध्येयः । यत् प्रेति प्रशब्दोपक्रमं वाक्यं तत्प्रतिपाद्यः प्रस्तावप्रतिपाद्यो वासुदेवः । हुमित्युपक्रम्य प्रशब्दश्रवणपर्यन्तं यावद् वाक्यं तावद्धिङ्कारार्थप्रद्युम्नार्थक-मित्युपासीत । तथा प्रेत्युपक्रम्य आ इत्यक्षरपर्यन्तं यावद्वाक्यं तावत् प्रस्तावार्थवासुदेवबोधकमित्येवंरूपेणाग्रे सर्वत्रार्थो ज्ञेयः । यत् आ इति वाचः शब्दस्य आ इति वर्णविशेषः तदुपक्रमोपेतवाक्यप्रतिपाद्यः आदिः कल्पादिहेतुत्वाद् वराहात्मा हरिः । यत् उत् इति वाचः शब्दस्य वर्ण-विशेषः तदुपनिबद्धवाक्यविशेषप्रतिपाद्यः उद्गीथो नारायणः । यत्प्रतीति-वाचः सम्बन्धि प्रतीति यत् पदं तदुपक्रमवाक्यबोध्यः प्रतिहाररूप-सामभक्तिप्रतिपाद्योऽनिरुद्धः । यदुपेति वाचःसम्बन्धि पदं तदुपक्रमवाक्य-बोध्यः उपद्रवः दुष्टोपद्रवहेतुतयोपद्रवनामा उपद्रवाख्यसामभक्तिप्रतिपाद्यो नरसिंहः । यत् नीत्यक्षरं नीत्यक्षरोपक्रमोपेतवाक्यं तद्बोध्यो यस्तन्निधनं निधनाख्यसामभक्तिवेद्यः सङ्कर्षणः । दुग्ध इति वाक्यमुक्तार्थमाद्या-ध्यायान्ते ॥ १ ॥ ८ ॥

॥ इति अष्टमः खण्डः ॥

**अथ नवमः खण्डः**

*( आदित्ये सप्तरूपिभगवदुपासना )*

**अथ खल्वमुमादित्यꣳ सप्तविधं सामोपासीत सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥ १ ॥**

आदित्यनिष्ठां सप्तविधसामनामकभगवदुपास्तिमाह– अथ खल्विति ॥

अथेति विद्यान्तरमुच्यत इत्यर्थः । खलुशब्दः प्रसिद्ध्यर्थः । आदित्यस्थमादित्यनामानं सप्तविधं साम सप्तविधसामप्रतिपाद्यं सप्तरूपं भगवन्तमुपासीत । सामत्वं हरेर्द्वेधा निरुच्य दर्शयति – **सर्वदेति** ।। यतः सर्वदा समरूपस्तेन हेतुना सामेत्युच्यते । किञ्च मां प्रति मां प्रति वर्तत इति सर्वेण लोकेन समः । मां प्रति मां प्रतीति सर्वदृष्टिविषयत्वसाम्यान्मण्डलस्य तत्रत्योऽपि हरिर्मण्डलस्य तादृशसर्वसम्पादकतया सर्वसम इति सामेत्युच्यत इत्यर्थः ।। १ ।।

*( आदित्यस्थभगवन्महिमा )*

**तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात् तस्य यत् पुरोदयात् स हिङ्कारस्तदस्य पशवोऽन्वायत्तास्तस्मात् ते हिङ्कुर्वन्ति हिङ्कारभाजिनो ह्येतस्य साम्नः ।। २ ।।**

तस्य सर्वभूताश्रयत्वमहिमानमाह– **तस्मिन्निति** ।। आदित्यनाम्नि आदित्यस्थे हरौ इमानि प्रमाणसिद्धानि सर्वाणि ब्रह्मादिभूतान्यन्वायत्तान्याश्रितानीति विद्यात् । सर्वभूतानां तदाश्रयत्वं स्पष्टमाह – **तस्य यत् पुरोदयादिति** ।। तस्याऽदित्यस्थस्य आदित्यनाम्नो हरेरुदयाद् यत् पुरा पूर्वकालः तत्रस्थः स हिङ्कारः हिमिति सामभक्तिप्रतिपाद्यः प्रद्युम्नः अस्याऽदित्यनाम्नो हरेः तत् प्रद्युम्नाख्यं रूपं पशवोऽन्वायत्ता आश्रिताः । तस्मादित्युक्तहेतुं व्यनक्ति – **हिङ्कारेति** ।। हि यस्मादस्यानुदितादित्यस्थस्य साम्नो हरेः सम्बन्धि हिङ्कारार्थप्रद्युम्नभाजिनस्तदाश्रयिणस्तस्मात् सुरभ्यादयः पशवो ज्ञानिनो हिङ्कुर्वन्ति हिमिति शब्दं कुर्वन्ति तज्जातित्वादाधुनिका अपि पशवस्तथा कुर्वन्तीत्यर्थः । एवमग्रेऽपि ।। २ ।।

**अथ यत् प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात् ते प्रस्तुतिकामाः प्रशꣳसाकामाः प्रस्तावभाजिनो**

**ह्येतस्य साम्नः ॥ ३ ॥**

अथ यत्प्रथमोदिने सूर्ये यत् यः स प्रस्तावः प्रस्तावार्थवासुदेवः। अस्य प्रथमोदितस्याऽदित्यनाम्नो हरेः तद् वासुदेवाख्यं रूपं मनुष्या अन्वायत्ताः। तस्मादित्यादि प्राग्वद् योज्यम्। प्रस्तुतिकामाः प्रारम्भकामाः प्रशंसा-कामाश्च भवन्तीत्यर्थः। प्रारम्भावतारत्वात् प्रशंसादेवतात्वाच्च वासुदेव-स्येति भावः ॥ ३ ॥

**अथ यत्सङ्गववेलायाꣳ स आदिस्तदस्य वयाꣳस्यन्वायत्तानि तस्मात् तान्यन्तरिक्षेऽनारम्बणान्यादायाऽत्मानं परिपतन्त्यादि-भाजिनो ह्येतस्य साम्नः ॥ ४ ॥**

**॥ अथ यदिति ॥** सङ्गववेलायां यद् यः स आदिः वराहः अस्य सङ्गववेलागतादित्यनाम्नो हरेः तद् वराहाख्यं रूपं वयांसि पक्षिणः अन्वायत्तानि आश्रितानि। तस्मादादित्यस्य विवरणमादीत्यादि। अनारम्भणानि अनाधारणानि आत्मानं स्वदेहमादाय पतन्ति सञ्चरन्ति सर्वपक्ष्याधारभूतवराहाश्रयत्वादेवेत्यर्थः ॥ ४ ॥

**अथ यत् सम्प्रति मध्यन्दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्त-स्मात् ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ॥ ५॥**

अथ सम्प्रतीदानीं मध्यन्दिनगते सूर्ये यद् यः स उद्गीथः नारायणः तदस्येत्यादि प्राग्वत्। प्राजापत्यानाम् ऋषिगन्धर्वादीनां सकाशादुत्तमा देवा इत्यर्थः। नारायणशब्दार्थत्वेनानन्तगुणपूर्त्या हरेरुपासनादिति भावः ॥ ५ ॥

**अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात् स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात् ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो**

**ह्येतस्य साम्नः ॥ ६ ॥**

॥ **अथ यदूर्ध्वमिति** ॥ मध्यन्दिनादूर्ध्वम् अपराह्णात् प्राक् मध्यन्दिनापराह्णमध्यभागगतादित्ये यस्तन्नामा हरिः स प्रतिहारोऽनिरुद्धः। तस्मादित्यादि पूर्ववद् योज्यम् । ते गर्भाः गर्भीभवन्तः पदार्थाः । पितृदेहादन्यत्र मातृदेहे प्रतिहृता नीता अपि नावपद्यन्ते न नश्यन्ति वर्धन्ते च प्रत्युत तत्रेत्यर्थः ॥ ६ ॥

**अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रवस्तदस्याऽरण्या अन्वायत्तास्तस्मात् ते पुरुषं दृष्ट्वा कक्षꣳ श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ॥ ७ ॥**

अथ यदूर्ध्वमपराह्णाद् अस्तमयात् प्राक् तन्मध्यभागगतादित्ये यद् यः सः उपद्रवो नरसिंहः। **आरण्या** अरण्ये भवाः मृगाः। कक्षं क्षुद्रतरुसङ्घः। श्वभ्रं नाम तन्मध्यावकाशः, बिलं वा। पुरुषं दृष्ट्वा भीता मृगाः कक्षश्वभ्रयोः स्थितनरसिंहस्य रक्षकस्याज्ञानेऽपि ताभ्यां रक्षणं मत्वा कक्षं श्वभ्रमिति मत्वा तदुद्दिश्योपद्रवन्ति तत्समीपं गच्छन्ति ॥ ७ ॥

**अथ यत् प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात् तान् निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमु-मादित्यꣳ सप्तविधꣳ सामोपास्ते ॥ ८ ॥ ९ ॥**

अथ प्रथमास्तमिते आदित्ये यद् यः सः निधनं निधनाख्यसामभक्तिप्रतिपाद्यः सङ्कर्षणः। एवं सर्वत्र ज्ञेयम् । तान् पितॄन् प्रति निदधति निक्षिपन्ति, पिण्डादीनीति शेषः । एवं खलु उक्तरूपेण खलु सप्तधा स्थितादित्यगतमादित्यनामकं सप्तविधसामभक्तिप्रतिपाद्यं सप्तरूपं सामाख्यं भगवन्तमुपास्ते साधुलोकः ॥ तेन च परमपदं चाऽप्नोतीति ग्राह्यम् ॥ ८ ॥ ९ ॥ **इति नवमः खण्डः ॥**

## अथ दशमः खण्डः

*( सप्तविधसामप्रतिपाद्यभगवतः रूपाणि समानि )*

**अथ खल्वात्मसम्मितमतिमृत्यु सप्तविधꣳ सामोपासीत हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम्** ॥ १ ॥

सप्तविधस्य साम्नो हरेः ज्ञानानन्दादिभिर्ब्रह्माद्यसमत्वस्वात्मरूपसमत्वविषयामुपास्तिमाह – **अथ खल्वित्यादिना** ॥ अथेति विद्यान्तरमुच्यत इत्यर्थः । खल्विति अस्या विद्यायाः परमपुमर्थहेतुत्वेनात्यपूर्वार्थत्वेन च प्रसिद्धतोच्यते । आत्मसम्मितम् आत्मना मूलरूपेण सम्मितं समानमेव, न तु ब्रह्मादिसदृशमित्यर्थः । अतिमृत्यु मृत्युमतिक्रान्तम् अमृत्युमिति यावत् । सप्तविधं प्रद्युम्नवासुदेववराहनारायणानिरुद्धनरसिंहसङ्कर्षणरूपेण सप्तधा स्थितं सप्तविधसामभक्तिप्रतिपाद्यं साम भगवन्तमुपासीत । रूपाणां ज्ञानानन्दबलैः समत्वं दर्शयति – **हिङ्कार इति त्र्यक्षरमिति** ॥ हिङ्कार इति त्रीण्यक्षराणि क्रमाद् ज्ञानानन्दबलवाचीनि । एवमेव प्रस्तावादिपदान्यपि सर्वाणि त्र्यक्षराणि क्रमाद् ज्ञानानन्दबलवाचीनि । तथा च तत्तत्प्रतिपाद्यरूपाण्यपि ज्ञानानन्दबलैः समान्येवेति भावेन हिङ्कारादिसप्तभक्तीनां त्र्यक्षरत्वेन साम्यमाह – **प्रस्ताव इति** ॥ त्र्यक्षरं तत्सममिति ॥ १ ॥

**आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम्** ॥ २ ॥

आदिरिति वराहनाम्नो व्यक्षरत्वेऽप्यनिरुद्धनाम्नः प्रतिहारेत्यतश्चतुरक्षरात् प्रशब्द आदिनाम्नि योज्यः । तथा च वराहानिरुद्धौ द्वावपि ज्ञानानन्दबलैरक्षरत्रयवाच्यैः समौ भवत इति भावेनाऽह – **आदिरिति व्यक्षरमिति** ॥ ततः प्रतिहारनामत इह आदिनाम्नि एकं प्रेत्यक्षरं

योज्यमिति शेषः । तत् नामद्वयं त्रिभिस्त्रिभिर्नारायणनरसिंहवाच्यु-द्गीथोपद्रवेति नामद्वयं समं ज्ञानादिगुणत्रयवाचितया सममित्यर्थः ॥ २ ॥

**उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः सम भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समम् ॥ ३ ॥**

अक्षरं, व इत्यक्षरमतिशिष्यते, अतिरिच्यते तदक्षरं वकाराकार-विसर्गभेदेन त्र्यक्षरात्मकतया ज्ञानानन्दबलवाचि सत् क्षीराब्धिशायिनो नारायणस्याष्टमरूपस्य नामेति तदपीतरनामसममित्यर्थः ॥ ३ ॥

*( हिङ्काराद्यक्षरप्रतिपाद्यानि भगवतो द्वाविंशद्रूपाणि )*

**निधनमिति त्र्यक्षरं तत्सममेव भवति तानि हवा एतानि द्वावि꣡ꣳशतिरक्षराणि ॥ ४ ॥**

सप्तविधस्य हरेरुपास्त्युक्त्याऽनुषङ्गसिद्धमुपास्त्यन्तरमाह– **तानीति**॥ सप्तविधमपि हरे रूपं प्रत्येकं त्रिविधं सद् एकविंशतिर्भवति, क्षीराब्धि-शायी चैक इति द्वाविंशतिर्मूर्तयः । तथा च तानीत्यादेरयमर्थः । तान्येतानि हिङ्कारादीन्यक्षराण्युक्तविधया द्वाविंशतिसंख्याकानीति द्वाविंशतिमूर्ति-वाचकानि । हवै प्रसिद्धमिति ॥ ४ ॥

*( एकविंशद्वाविंशमूर्त्युपास्तिफलम् )*

**एकवि꣡ꣳशत्याऽऽदित्यमाप्नोत्येकविंशो वा इतोऽसावादित्यो द्वावि꣡ꣳशेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥ ५ ॥**

तत्रैकविंशद्वाविंशमूर्त्युपास्त्योः फलमाह – **एकविंशत्येति** ॥ नमित्ये-कविंशाक्षरेण तद्वाच्यकल्किसङ्कर्षणाख्यरूपोपासनयेति यावत् । आदि-त्यमादित्यस्थमादित्यनामानं कल्किसङ्कर्षणाख्यं रूपमाप्नोतीत्यर्थः ।

एकविंशत्युपास्त्या कथमादित्यस्य प्राप्तिरित्यतः उपास्यरूपसाम्यादित्याह – **एकविंशो वा इति** ॥ इतः पृथिव्यां स्थितरूपापेक्षयाऽसावादित्य एकविंशो वै । द्वाविंशेन व इत्यक्षरेण, व इति द्वाविंशाक्षरवाच्यक्षीराब्धिशायिहर्युपासनयेति यावत् । आदित्याद् आदित्यस्थरूपात् परमन्यत् क्षीराब्धिशायि रूपं जयति प्राप्नोति । उपलक्षणमेतत् । इतरविंशत्यक्षरवाच्यविंशतिरूपोपासनया तानि रूपाण्याप्नोतीत्यपि ग्राह्यम् ॥

*( तत्तदक्षरवाच्यतत्तद्गततत्तद्रूपोपासनया तत्तन्निष्ठभगवद्रूपप्राप्तिरूपफलयोजनम् )*

इदमत्र ज्ञातव्यम् । हिङ्कार इत्यारभ्य निधनमित्यन्तानि सप्तभक्त्यक्षराण्युक्तदिशा एकैकभक्तेः त्रित्र्यक्षरत्वेनैकविंशत्यक्षराणि । अतिरिच्यमानं व इत्येकमक्षरं द्वाविंशम् । सप्तभक्तिप्रतिपाद्यानि प्रद्युम्नवासुदेववराहनारायणानिरुद्धनरसिंहसङ्कर्षणभेदेन सप्तरूपाणि । तत्राऽद्यानि चत्वारि रूपाणि केशवादिदामोदरान्तद्वादशात्मना प्रत्येकमेकैकं रूपं क्रमात् त्रेधा त्रेधा भिन्नानि भूत्वा चतुर्भक्तिगतहिमादिप्रेत्यन्तद्वादशाक्षरप्रतिपाद्यानि केशवप्रद्युम्न-नारायणप्रद्युम्न-माधवप्रद्युम्न-गोविन्दवासुदेव-विष्णुवासुदेव- मधुसूदनवासुदेव- त्रिविक्रमवराह- वामनवराह-श्रीधरवराह-हृषीकेशनारायण- पद्मनाभनारायण-दामोदरनारायणेत्या-ख्यायमानानि चैत्रादिफाल्गुनान्तेषु द्वादशमासेषु तिष्ठन्ति । प्रतिहारोपद्रवनिधनरूपावशिष्टसामभक्तित्रयप्रतिपाद्यान्यनिरुद्धनरसिंहसङ्कर्षणरूपाणि बुद्धं हित्वा मत्स्यादिकल्क्यन्तनवरूपात्मना प्रत्येकं त्रेधा त्रेधा भिन्नानि भूत्वा क्रमाद् हीतीत्यादिनमित्यन्ताक्षरनवकेनोच्यमानानि मत्स्यानिरुद्ध-कूर्मानिरुद्ध वराहानिरुद्ध-नरसिंहनरसिंह-वामननरसिंह-भार्गवनरसिंह-रामसङ्कर्षण-कृष्णसङ्कर्षण-कल्किसङ्कर्षणेत्याख्यायमानानि सन्ति । हेमन्तशिशिरयोरैक्येन क्रमाद् वसन्तादिऋतुपञ्चके

पृथिव्यन्तरिक्षद्युसूर्येषु तिष्ठन्तीति । एवं च सत्यादित्यस्थो नमित्येकविंशाक्षरार्थः कल्किसङ्कर्षणः पृथिवीमासऋत्वन्तरिक्षद्युलोकापेक्षया एकविंशो भवति । 'द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इति श्रुतेः । केशवादिरूपेण ललाटादिषु स्थितेरिति एकविंश इति वा । अतिरिक्तं व इत्यक्षरं तु द्वाविंशमिति तदर्थभूतक्षीराब्धिगतरूपोपासनया क्षीराब्धिगतप्राप्तिरिति । एवं तत्तदक्षरवाच्यतत्तद्गततत्तद्रूपोपासनया तत्तन्निष्ठरूपप्राप्तिर्भवतीति ॥

द्वाविंशतिरूपजातस्य महिमानमाह – **तदिति** ॥ तद् द्वाविंशतिरूपजातम् असुखवर्जनात् पूर्णानन्दस्वरूपत्वाद्वा नाकमिति भक्तानां शोकनाशनाद् विशोकमिति चोच्यते ॥ ५ ॥

**आप्नोतीहाऽदित्यस्य जयं परो हास्याऽदित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसम्मितमतिमृत्यु सप्तविधꣳ सामोपास्ते सामोपास्ते ॥ ६ ॥ १० ॥**

ननु तत्तद्रूपोपासनया तत्र तत्र स्थितरूपप्राप्त्युक्तौ तत्तद्रूपाणां स्वस्वप्राप्तिमात्रदातृत्वप्राप्त्या रूपेषु गुणानां व्यवस्थितत्वात् कथं सर्वरूपाणामात्मसम्मितत्वोक्तिरित्याशङ्कां परिहरन्नुपासकस्य फलमाह– **आप्नोतीत्यादिना** ॥ **यो**ऽधिकारी **एतत्** सर्वसन्निहितं, द्वाविंशतिभेदभिन्नरूपजातमिति वा **एवं** द्वाविंशत्यक्षरवेद्यत्वरूपेण **विद्वान्** जानन् **आत्मसम्मितमतिमृत्यु** सप्तविधं प्रद्युम्नादिसप्तरूपं **साम** सप्तविधभक्त्युपेतसामप्रतिपाद्यं हरिमुपास्ते, स इति शेषः । स उपासकः इह पृथिव्यादिस्थितभार्गवादिभगवद्रूपमाप्नोति । तत्प्राप्त्या चाऽदित्यस्याऽदित्यस्थस्याऽदित्यनाम्नः, कल्किसङ्कर्षणाख्यरूपस्येति यावत् । जयं प्राप्तिं ह्याप्नोति लभते, रूपाणामैक्यात् । आदित्यस्याऽदित्यस्थस्य उक्तरूपहरेर्जयात् प्राप्त्या अस्योपासकस्य परो जयः पृथिव्यादिस्थितरूपान्तरजयो

भवति रूपाणामैक्यादेव । अतो नाऽत्मसम्मितत्वोक्त्ययुक्तिरिति भावः । द्विरुक्तिरुक्तार्थे तात्पर्यज्ञप्त्यर्था ॥ ६ ॥ इति दशमः खण्डः ॥

## अथ एकादशः खण्डः

*( गायत्रसामप्रतिपाद्यभगवदुपासना )*

**मनो हिङ्कारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद् गायत्रं प्राणेषु प्रोतꣳ स य एवमेतद् गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या महामनाः स्यात् तद् व्रतम् ॥ १ ॥ ११ ॥**

पूर्वं सामविशेषनामोक्तिं विना पञ्चविधसप्तविधसामभक्तिप्रतिपाद्यस्य हरेरुपास्तिरुक्ता । अधुना सामविशेषनामोक्तिपूर्वं पञ्चविधतत्तद्भक्तिप्रतिपाद्यस्य हरेरुपास्तिम्, ऐहिकामुष्मिकफले, तद्व्रतं चाऽह मन इत्याद्येकादशपर्वभिः । तत्र गायत्रसामनिष्ठामुपास्तिमाह – **मन इति** ॥ मनस्थं मनोनामकं हिङ्कारः हिमित्याक्रियत इति हिङ्काराख्यप्रथमभक्तिप्रतिपाद्यः प्रद्युम्नः । एवमग्रेऽपि सर्वत्र योजना । **वाक्** वाङ्नामा **प्रस्तावः** वासुदेवः । **चक्षुश्**चक्षुस्थः चक्षुर्नामा **उद्गीथः** नारायणः । **श्रोत्रं** श्रोत्रस्थः श्रोत्रनामकः **प्रतिहारो**ऽनिरुद्धः । **प्राणः** प्राणस्थः प्राणनामा **निधनं** सङ्कर्षणः एतत् प्राणस्थविष्णुवाचितया तत् सन्निहितं गायत्राख्यं साम प्राणेषु प्राणस्थे प्राणनाम्नि हरौ प्रोतं तद्वाचकं तन्नियम्यं चेत्यर्थः । ज्ञानिनः फलमाह – **स य इति** ॥ योऽधिकारी एवमित्यस्य विवरणमेतदित्यादि । यद्वा, हिङ्कारादिपञ्चभक्तिभिर्मनःप्रभृतिपञ्चस्थानगतप्रद्युम्नादिभगवद्रूपप्रतिपादकत्वादिप्रकारेणैतद्गायत्रं प्राणेषु प्राणस्थहरौ प्रोतं तद्वाचकं

तन्नियम्यं चेति वेद, स वेदी प्राणी भवति प्राणस्थप्राणनामक-विष्णुलाल्यतया तद्वान् भवति, सर्वमायुर्मोक्षमेति। ऐहिकफलमाह–ज्योक् स्वयोग्यसर्ववित् सञ्जीवतीत्यादि । तस्य व्रतमाह – **महामना इति ॥** गायत्रसामवेदिनो महामनस्त्वं व्रतमित्यर्थः ॥११॥इति **एकादशः खण्डः॥**

## अथ द्वादशः खण्डः

*( रथन्तरसामप्रतिपाद्यभगवदुपासना )*

**अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनꣳ सꣳशाम्यति तन्निधनमेतद् रथन्तरमग्नौ प्रोतम् ॥ १ ॥**

रथन्तरसामप्रतिपाद्यभगवदुपास्तिमाह – **अभीति ॥** यो हिङ्कारः प्रद्युम्नः सः अभिमन्थति अरणिमथनगतः। प्रस्तावो वासुदेवो यः सः धूमो जायते जायमानधूमगतः । उद्गीथो नारायणो ज्वलति ज्वालागतः । प्रतिहारोऽनिरुद्धोऽङ्गारावस्थापन्नवह्निगतः । निधनं सङ्कर्षणः उपशम-संशमशब्दितसावशेषनाशनिश्शेषनाशोभयगतः । एतद् अग्निस्थहरि-वाचितया तत्समीपस्थं रथन्तराख्यं सामाग्नौ अग्निस्थेऽग्निनाम्नि हरौ प्रोतं तद्वाचकं तन्नियम्यं चेत्यर्थः ॥ १ ॥

**स य एवमेतद् रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्व्यान्नादो भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत् तद् व्रतम् ॥२ ॥ १२ ॥**

स य इत्यादिफलवाक्यं प्राग्वत् । एतत्सामार्थवेदिनो व्रतमाह – **न प्रत्यञ्चमग्निमिति ॥** अग्न्यभिमुखतया नाऽचामेत् , न निष्ठीवेत् किञ्चित् प्रत्यपि श्लेष्मनिरसनं न कुर्यात् । प्रत्यञ्चमग्निं न निष्ठीवेदिति वा ॥ २ ॥

॥ इति द्वादशः खण्डः ॥

## अथ त्रयोदशः खण्डः

*( वामदेव्यसामप्रतिपाद्यभगवदुपासना )*

**उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रतिस्त्री सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद् वामदेव्यं मिथुने प्रोतम् ॥ १ ॥**

वामदेवसामार्थविष्णूपास्तिमाह– **उपेति** ॥ उपमन्त्रयते रन्तुं सम्भाषते ज्ञपयते सुखमनुभवति । स्त्रिया सह शेते एकपर्यङ्कगमनम् । प्रतिस्त्री सह शेते मैथुनकरणम् । कालं गच्छति पारं गच्छति मैथुनसमाप्तिगमनम् । मिथुने मिथो नयतीति व्युत्पत्त्या मिथुननाम्नि हरौ ॥ १ ॥

**स य एवमेतद् वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनान्मिथुनात् प्रजायते सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न काञ्चन परिहरेत् तद् व्रतम् ॥ २ ॥ १३ ॥**

मिथुनी मिथुननामकविष्णुलाल्यत्वात् तद्वान् भवति । मिथुनात् मिथुनस्थितभगवतः सकाशात् प्रजायते प्रकृष्टो जायते कर्मवशादनेकस्त्री-परिग्रहे सति तासु काञ्चन न परिहरेत् तद् व्रतम् ॥ २ ॥

॥ इति त्रयोदशः खण्डः ॥

## अथ चतुर्दशः खण्डः

*( बृहत्सामप्रतिपाद्यभगवदुपासना )*

**उद्यन् हिङ्कार उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद् बृहदादित्ये प्रोतꣳ स य एवमेतद्**

**बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या तपन्तं न निन्देत् तद् व्रतम्** ॥ १४ ॥

बृहत्सामवेद्यभगवदुपास्तिमाह – **उद्यन्निति** ॥ उदयं प्राप्नुवन् आदित्ये[१] स्थितहिङ्काराख्यः प्रद्युम्नः । आदित्यस्यैकत्वेऽप्युदयाद्यवस्था-भेदाद् भेदः । मध्यन्दिनो मध्यन्दिनगतः । अपराह्णोऽपराह्णगतः । अस्तं यन् प्राप्नुवन् बृहद् बृहदाख्यं साम । उदयाद्यवस्थाभेदेन पञ्चधा भिन्नादित्यस्थे आदित्यनाम्नि प्रद्युम्नादिपञ्चधा भिन्ने प्रोतम् । बृहत्सामनिष्ठस्य व्रतमाह – **तपन्तं न निन्देदिति ॥ इति चतुर्विंशः खण्डः ॥**

## अथ पञ्चदशः खण्डः

*( वैरूपसामप्रतिपाद्यभगवदुपासनम् )*

**अभ्राणि सम्प्लवन्ते स हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद् वैरूपं पर्जन्ये प्रोतꣳ स य एवमेतद् वैरूपं पर्जन्ये प्रोतं वेद विरूपाꣳश्च सरूपाꣳश्च पशूनवरुन्धे सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या वर्षन्तं न निन्देत् तद् व्रतम्** ॥ १ ॥ १५ ॥

वैरूपाख्यसामवेद्यभगवदुपास्तिमाह – **अभ्राणीति** ॥ सम्प्लवन्ते इतस्ततः सञ्चरन्ति इतस्ततो मेघसञ्चरणक्रियाहेतुस्तन्निष्ठो हिङ्कारार्थप्रद्युम्न इत्यादिरर्थो ध्येयः । मेघो जायते वर्षानुकूलतया जायते । विद्योतत इति विद्युत्स्तनयित्नूभयगतः । उद्गृह्णाति वर्षमुपसंहरतीत्यर्थः । पर्जन्ये पर्जन्यस्थे

---

१. अत्र 'प्राप्नुवदादित्ये' इति पाठः स्यादिति भाति । उद्यदादित्यस्थितेत्यर्थः ।

पर्जन्यनाम्नि विरूपानजाविप्रभृतीन् सरूपानेकजातीयान् गवादीनवरुन्धे प्राप्नोति ॥ १ ॥ इति पञ्चदशः खण्डः ॥

## अथ षोडशः खण्डः

*( वैराजसामप्रतिपाद्यभगवदुपासनम् )*

**वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनमेतद् वैराजमृतुषु प्रोतꣳ स य एवमेतद् वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ऋतून्न निन्देत् तद् व्रतम् ॥ १६ ॥**

वैराजाख्यसामवेद्यहर्युपास्तिमाह – **वसन्त इति** ॥ हेमन्तशिशिरयोरैक्येनाऽऽह – **हेमन्त इति** ॥ ऋतुषु ऋतुस्थिते ऋतुनाम्नि । बहुरूपत्वाद् बहुवचनम् ॥ १६ ॥ इति षोडशः खण्डः ॥

## अथ सप्तदशः खण्डः

*( शक्करीसामप्रतिपाद्यभगवदुपासनम् )*

**पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्कर्यो लोकेषु प्रोताः स य एवमेताः शक्कर्यो लोकेषु प्रोता वेद लोकीभवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या लोकान्न निन्देत् तद् व्रतम् ॥ १७ ॥**

शक्कर्याख्यसामवेद्यहर्युपास्तिमाह – **पृथिवी हिङ्कार इति** ॥ देशनादाज्ञापनाद् दिशो दिङ्नामा दिग्गतः प्रतिहारोऽनिरुद्धः समुद्रेकाद् गुणैः समृद्धत्वात् समुद्रनामा समुद्रस्थः । एताः शक्कर्य शक्कर्याख्यं साम ।

बहुवचनं रेवत्य इव शब्दस्वाभाव्यात् । लोकेषु प्रकाशरूपतया लोकनाम्नि लोकस्थे हरौ । बहुवचनं प्राग्वत् । लोकस्थलोकनामकहरिलाल्यत्वात् तद्वान् भवतीत्यर्थः ॥ १ ॥ १७ ॥ **इति सप्तदशः खण्डः ॥**

**अथ अष्टादशः खण्डः**

*( रेवतीसामप्रतिपाद्यभगवदुपासनम् )*

**अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः स य एवमेता रेवत्यः पशुषु प्रोता वेद पशुमान् भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या पशून्न निन्देत् तद् व्रतम् ॥ १८ ॥**

रेवत्याख्यसामवेद्यहर्युपास्तिमाह– **अजा इति** ॥ पशुषु पशुनामके पशुगते पश्वात्मनि हरौ 'रेवत्यः' इति बहुवचनं शब्दस्वाभाव्यात् ॥१८॥

**अथ एकोनविंशः खण्डः**

*( यज्ञायज्ञीयसामवेद्यभगवदुपासनम् )*

**लोम हिङ्कारस्त्वक् प्रस्तावो माꣳसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद् यज्ञायज्ञीयमङ्गेषु प्रोतꣳ स य एवमेतद् यज्ञायज्ञीय-मङ्गेषु प्रोतꣳ वेदाङ्गीभवति नाङ्गेन विमूर्च्छति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात् तद् व्रतं मज्ज्ञु नाश्नीयादिति वा ॥ १९ ॥**

यज्ञायज्ञीयाख्यसामवेद्यहर्युपास्तिमाह – **लोमेत्यादिना** ॥ लोपकत्व-हेतुना लोमनामा लोमस्थः । तवःशब्दितप्रकाशरूपत्वहेतुना त्वङ्नामा त्वचि स्थितः । मादनात् साररूपत्वान्मांसनामा मांसस्थः । स्थिरमासनाद्

उपवेशनाद् अस्थिनामाऽस्थिगतः । मदस्य जननात् मज्जानामा मज्जागतः । अङ्गेषु अङ्गगतत्वहेतुना देहावयवभूताङ्गस्थेऽङ्गनाम्नि हरौ अङ्गस्थ-विष्णुमानिति हेतोरङ्गी भवतीत्यर्थः । अङ्गेनाङ्गस्थेन हरिणा तत्प्रसादेनेति यावत् । न विहूर्च्छति कुटिलाङ्गवान्न भवति । मज्ञ इति द्वितीयाबहुवचनं मांसविशेषानित्यर्थः । मज्ञु मांसविशेषं कदाऽपि नाश्नीयादित्यर्थः ॥ १९ ॥ इति एकोनविंशः खण्डः ॥

अथ विंशः खण्डः

*( राजनसामप्रतिपाद्यभगवदुपासनम् )*

**अग्निर्हिङ्कारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहार-श्चन्द्रमा निधनमेतद् राजनं देवतासु प्रोतꣳ स य एवमेतद् राजनं देवतासु प्रोतं वेदैतासामेव देवतानाꣳ सलोकताꣳ सार्ष्टिताꣳ सायुज्यं गच्छति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ब्रह्माणान्न निन्देत् तद् व्रतम् ॥ २० ॥**

राजनाख्यसामवेद्यनिष्ठोपास्तिमाह – **अग्निरिति** ॥ अदनादग्नि-नामाऽग्निस्थः वानाद् ज्ञानादायुष्ट्वाच्च वायुनामा वायुस्थः स्वातन्त्र्यहेतुना नक्षत्रनामा नक्षत्रस्थः परमानन्दत्वाच्चन्द्रनामा चन्द्रस्थः देवतासु देवतास्थे हरौ सार्ष्टितां सामीप्यम् ॥ २० ॥ इति विंशः खण्डः ॥

अथ एकविंशः खण्डः

*( इतरसर्वसामप्रतिपाद्यभगवदुपासनम् )*

**त्रयी विद्या हिङ्कारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स**

**उद्गीथो नक्षत्राणि वया९ंसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत् साम सर्वस्मिन् प्रोतं स य एवमेतत् साम सर्वस्मिन् प्रोत९ं वेद सर्व९ं ह भवति ॥ १ ॥**

सर्वाख्यसामवेद्यभगवदुपास्तिमाह – **त्रयीत्यादिना** ॥ ज्ञानरूपत्व-हेतुना त्रयीविद्यानामा त्रय्यां विद्यायां स्थितः इमे लोकाः प्रकाशरूपतया लोकनामा लोकस्थः प्रागुक्तनिरुक्त्याऽग्निवाय्वादित्यस्थः । विशब्दार्था-काशे अयनाद् वयोनामा वयःशब्दितपक्षिषु स्थितः । प्रमितरुक्त्वा-न्मरीचिनामा मरीचिस्थितः । सर्पणहेतुना गोधरत्वहेतुना सृष्टिहेतुत्वहेतुना च सर्पगन्धर्वपितृनामा सर्पादिस्थः । एतत् सर्वं सर्वाख्यं साम सर्वस्मिन् सर्वाख्यसाम्नि स्थिते सर्वगुणपूर्णे हरौ । स्वयोग्यसर्वपूर्तिमान् भवतीति भावेन सर्वं हि भवतीति फलोक्तिः ॥ १ ॥

*( उक्तार्थे मन्त्रकथनम् )*

**तदेष श्लोको यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति । यस्तद् वेद स वेद सर्व९ं सर्वा दिशो बलिमस्मै हरन्ति । सर्वमस्मीत्युपासीत तद् व्रतं तद् व्रतम् ॥ २ ॥ २१ ॥**

उक्तार्थे मन्त्रं पठति – **तदेष इति** ॥ तत् तत्र यानि हिङ्काराद्यर्थभूतानि पञ्चविधप्रद्युम्नादिपञ्चरूपाणि प्रत्येकम् ऋगादित्रित्रिस्थानभेदेन त्रिधा त्रिधा स्थिततया त्रीणि त्रीणि वर्तन्ते तेभ्यो भगवद्रूपेभ्यः परं ज्यायोऽन्यन्नास्ति त्रयीविद्यादिपञ्चवर्गेभ्यो ज्यायः श्रीतत्त्वमस्तीति परं ज्याय इत्युक्तम् । परं ज्यायो भगवद्रूपमेव, नान्यदिति भावः । यस्तत् परमज्यायो भगवद्रूपं नान्यदित्येतद् वेद स सर्वं वेद सर्ववेदप्रमेयस्य ज्ञानादिति भावः । सर्वाः दिशः सर्वदिगवस्थिताः प्रजाः बलिं पूजामस्मै ज्ञानिने हरन्ति । सर्वाख्यसामोपासकस्य व्रतमाह– **सर्वमिति** ॥ असनात्

मितिरूपत्वादस्मीत्युक्तं भगवद्रूपं सर्वं परिपूर्णमित्युपासीत तद् व्रतम् । द्विरुक्तिस्तात्पर्यज्ञप्त्यर्था ॥ २ ॥ इति एकविंशः खण्डः ॥

## अथ द्वाविंशः खण्डः

*( सामगानस्य ध्वनिप्रभेदाः )*

**विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान् सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेत् ॥ १ ॥**

सामनाम्नो हरेर्व्यस्तसमस्तसामोपास्तिरुक्ता । तत्र साम्न उद्गानप्रकारं सप्रभेदमाह– **विनर्दीत्यादिना** ॥ साम्नः सामनाम्नो हरेः विनर्दि गानप्रकारं, विशिष्टो नर्दो नादोऽस्यास्तीति विनर्दि, विशिष्टनादोपेतं गानम् । सपादैकवर्षवृषभस्वरवद् वा मेघस्वरवद् वा स्थिरस्वरोपेतं सामनामभगवत्कर्तृकं विनर्दिशब्दितं गानमहं वृणे । तादृशस्वरोपेतमेव सामगानं कुर्यामित्यृपेर्वाक्यम्, उद्गातुर्वा । तादृशस्वरस्यैव सर्वोत्तमत्वात् तादृशस्वरेणैवोद्गाता साम गायेदिति भावः । तादृशस्वराशक्तौ स्वरान्तरेण गातव्यमिति भावेन तत्प्रभेदानाह – **पशव्यमित्यादिना** ॥ पशव्यमित्यग्नेः । अग्नेरुद्गीथ उद्गानं पशव्यमिति । इतिशब्दः प्रकारवाची । स्त्रीपशुसम्बन्धिस्वरप्रकारमित्यर्थः । प्रजापतेर्ब्रह्मण उद्गीथ उद्गानम् अनिरुक्तः अनुपमो गम्भीर इत्यर्थः । सामस्योद्गीथः निरुक्तः साक्षात् घण्टानिनादवत् । वायोरुद्गीथः मृदु श्लक्ष्णं, मृदु मेघस्वरवत् विंशतिवर्षवृषभस्वरवद्वा । इन्द्रस्योद्गीथः श्लक्ष्णं बलवत् तीव्रमेघगर्जनवत् । बृहस्पतेः क्रौञ्चपक्षिस्वरवद् उद्गीथः । वरुणस्योद्गीथः अपध्वान्तं विस्वरः । तान् सर्वानेवोपसेवेत एतैः सर्वैरपि स्वरैर्गायेदिति यावत् । वारुणं त्वेवापस्वरं वर्जयेत् ॥ १ ॥

**अमृतत्वं देवेभ्य आगायानीत्यागायेत् स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ॥ २ ॥**

गाने इतिकर्तव्यतामाह– **अमृतत्वमित्यादिना** ॥ 'इति मनसा ध्यायन्' इति सर्वत्रान्वेति । मुख्यवायुश्चेदुद्गाता सः देवेभ्योऽमृतत्वं मुक्तिमागायानि गानेन साधयामीति मनसा ध्यायन् साम गायेत् । तथा गाने हि स्वस्यापि देवान्तर्भावान्मुक्तिसिद्धिरिति भावः । मुख्यवायुतोऽन्यश्चेदुद्गाता स मद्धृदिस्थो वायुः देवेभ्यः अमृतत्वमागायतीति मनसा ध्यायन् गायेदित्यर्थः । एवमग्रेऽपि । पितृभ्यः स्वधां श्राद्धादिभागमुद्दिश्याऽगायानीति मनसा ध्यायन्नागायेदित्यनुषङ्गः । मनुष्येभ्य आशाम् आशासितम्, इष्टमिति यावत् । पशुभ्यः तृणोदकमिति द्वन्द्वैकवद्भावः । आगायानीति मनसा ध्यायन्नागायेदित्यन्वेति । आत्मने स्वस्मै प्राणस्थविष्णवे । प्राण एव चेदुद्गाता तदा स्वात्मगतविष्णवेऽन्नगानेऽर्थात् स्वस्यान्नभुजिर्भवति । प्राणादन्यश्चेत् स्वगतमुख्यवायुस्थविष्णवेऽन्नगाने स्वस्याप्यन्नभुजिरर्थसिद्धेति ज्ञेयम् । एतानि अमृतत्वमागायानीत्याद्युक्तानि । यद्वा ''सर्वे स्वराः'' इत्यादिना वक्ष्यमाणानि मनसा ध्यायन् अप्रमत्तः प्रमादहीनः स्तुवीत सामोपेतगीर्भिः स्तोत्रं कुर्यात् ॥ २ ॥

*( सामगानकालीनानुसन्धानकथनम् )*

**सर्वे स्वरा इन्द्रस्याऽत्मानः सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रं शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥**

ध्यायन्नित्युक्तध्येयान्याह – **सर्वे इति** ॥ सर्वे स्वराः अकाराद्यज्वर्णाः, इन्द्रस्य इदं रातीति व्युत्पत्त्या वायोरात्मनः अधिष्ठानभूताः । सर्वे ऊष्माणः

शषसहाः, प्रजापतेः प्रजाः पातीति प्रजापतिनाम्नो विष्णोः आत्मानः विष्णुस्वामिकाः । सर्वे स्पर्शाः ककारादिमावसानाः पञ्चवर्गगा वर्णाः मृत्योर्मारयितृत्वहेतुना मृत्युनाम्नो रुद्रस्याऽत्मानः । अस्खलितेष्वपि स्वरादिषु केनचिदसुरवर्गेणोपालम्भे कृते वक्तव्यमाह – **तं यदीति** ।। तं सम्यक् स्वरानुच्चारयन्तं यदि कश्चिदसुरस्वभावः स्वरविषये उपालभेत निन्द्यात् तदेति शेषः । इन्द्रम् इन्द्रशब्दितं वायुं शरणं रक्षकं प्रपन्नः प्राप्तोऽभूवम् । स इन्द्राख्यो वायुः त्वा त्वां प्रति वक्ष्यति प्रत्युत्तरं दास्यतीत्येनं निन्दकं ब्रूयात् ।। ३ ।।

**अथ यद्येनमूष्मसूपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयादथ यद्येन्ँ स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवं स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात् ।। ४ ।।**

एवमूष्मशब्दितवर्णानुच्चारयन्तमूष्मसु विषये । प्रजापतिं विष्णुं स प्रजापतिः त्वा त्वां प्रतिपेक्ष्यति पिष्टं करिष्यति । एनं निन्दकम् । स्पर्शेषु विषये । मृत्युं रुद्रं, स त्वा त्वाम् प्रतिधक्ष्यति भस्मसात् करिष्यति ।। ४ ।।

**सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृत्ता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ।। ५ ।। २२ ।।**

स्वरादेरिन्द्राद्यात्मतोक्तेः कृत्यमाह– **सर्व इति** ।। अकारादयः सर्वे स्वराः इन्द्रे ऐश्वर्यादिन्द्रनामके वायौ बलं ददानीति । मनसा ध्यायन् स्वरवन्तः ध्वनिविशेषयुक्ताः बलवन्तो विवृताख्यप्रयत्नवन्तो वक्तव्याः । उद्गातुर्वायुत्वे तु वायुपदयोग्यानां बहुत्वाद् यजमानभूतवायुपदयोग्यस्य विष्णुतो मुक्तिदानमेव बलदानं ज्ञेयम् । प्रजापतेर्विष्णोरात्मानं स्वात्मान

परिददानि समर्पये इति ध्यायन् सर्वे ऊष्माणः अग्रस्ता अदष्टा अनिरस्ताःअनतिद्रुतोच्चारिता विवृतप्रयत्नका वक्तव्याः । 'विवृतमूष्मणां स्वराणां च' इति शिक्षाग्रन्थोक्तेः । मृत्यो रुद्राद् आत्मानं जीवजातं परिहराणि मृत्युवर्जितान् मुक्तियोग्यान् करिष्यामीति ध्यायन् सर्वे स्पर्शाः लेशेनानभिहताः लेशतोऽप्यसंस्पृष्टा वक्तव्याः । वायुश्चेदुद्गाता मुक्तियोग्यं करोत्येव । अन्यश्चेन्मद्गतो वायुः करोतीति ध्यायन् स्पर्शानुच्चारयेदित्यर्थः ।। ५ ।। **इति द्वाविंशः खण्डः ।।**

## अथ त्रयोविंशः खण्डः

*( धर्मब्रह्मज्ञानयोः फलनिरूपणम् )*

**त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽव-सादयन् सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ।। १।।**

व्यस्तसमस्तसाम्ना सामनाम्नो हरेरुपासकानां स्वर्गमोक्षौ फलत्वे-नोक्तौ । तत्र केषां किमिति जिज्ञासायां तद् विवेकेनाऽऽह – **त्रय इति ।।** धर्मस्कन्धाः धर्मसङ्घाः त्रयः । तदाह– **यज्ञ इति ।।** प्रथमस्कन्ध इत्यन्वेति । तपः कृच्छ्रचान्द्रायणेन्द्रियजयादिकं द्वितीयस्कन्धः । ब्रह्मचार्याचार्य-कुलवासी सन् अत्यन्तमात्मानमाचार्यकुलेऽवसादयेदिति यत् स तृतीय-स्कन्धः । एते यज्ञादिनिष्ठाः सर्वे पुण्यलोकाः पुण्यः पुण्यप्राप्यः स्वर्गादिलोको येषां ते पुण्यलोका भवन्ति ।

तत्रायं विवेकः । यज्ञाध्ययनदानैर्गृही सोमलोकं याति । यतिस्तपसा सूर्यम् । वनस्थो ब्रह्मचारी च ऋषिलोकमिति । उक्तेषु मध्ये यदि कश्चिद् ब्रह्मसंस्थो ब्रह्मज्ञानी तर्हि अमृतत्वं मुक्तिमेति ।। १ ।।

*( दृष्टान्तपूर्वकं ॐकारस्य सर्ववेदसारत्वकथनम् )*

**प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत् तामभ्यतपत् तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरिति तान्यभ्यतपत् तेभ्योऽभितप्तेभ्य ॐकारः सम्प्रास्रवत् तद् यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येव-मेतेनोङ्कारेण सर्वा वाक् सन्तृण्णोङ्कार एवेद९ं सर्वमोङ्कार एवेद९ं सर्वम् ॥ २ ॥ २३ ॥**

प्रायो मुमुक्षुजप्यो मन्त्रः वेदाद्यर्थतया सर्वसारत्वादोङ्कार एवेत्याख्यायिकयाऽऽह – **प्रजापतिरित्यादिकया** ॥ प्रजापतिर्विष्णुः सारान् विवेक्तुं शब्दात्मलोकानभ्यतपत् अपश्यत् । तेभ्यः शब्दात्म-लोकेभ्य अभितप्तेभ्यः दृष्टेभ्यः त्रयी विद्या ऋगादिरूपा सम्प्रास्रवत् सारत्वेन भगवता व्यज्ञायत । तामित्यादिवाक्यत्रयमप्येवं व्याख्येयम् । ओङ्कारस्योक्तं सर्वसारत्वं दृष्टान्तपूर्वं व्यनक्ति – **तद्यथेति** ॥ वक्ष्यमाणं निदर्शनम् । यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णानि प्रोतानि, एवमोङ्कारेण भगवन्नामभूतेन सर्वा वाक् सन्तृण्णा प्रोता । सर्ववाचां तदर्थविवृतिपर-त्वात् । इदं प्रकृतमोङ्कार एव सर्वम् । अर्थपूर्तिवाचिनः सर्वपदस्य नपुंसकतया तदन्वितत्वादिदमित्यपि नपुंसकं कृतम् । अयमोङ्कार सर्वम् अर्थपूर्ण इत्यर्थः । द्विरुक्तिरुक्तार्था ॥ २ ॥ **इति त्रयोविंशः खण्डः ॥**

## अथ चतुर्विंशः खण्डः

*( स्वर्गमोक्षमार्गे प्राप्तविघ्नपरिहारोपायनिरूपणम् )*

**ब्रह्मवादिनो वदन्ति यद् वसूनां प्रातःसवन९ं रुद्राणां माध्यन्दिन९ं सवनमादित्यानां विश्वेषां देवानां च तृतीयसवनं**

**क तर्हि यजमानस्य लोक इति स यस्तं न विद्यात् कथं कुर्यादथ विद्वान् कुर्यात् ॥ १ ॥**

सामनामकभगवदुपास्त्या स्वर्गमोक्षावुक्तौ । तत्र प्राप्तविघ्नपरिहार-हेतुभूतवस्वादिनिष्ठभगवदुपास्तिं शिष्यगुर्वाक्षेपसमाधिरूपाख्यायिकयाऽऽह– **ब्रह्मवादिन इति** ॥ यद् यदि वसूनां प्रातस्सवनं भूलोकश्चेत्युपलक्ष्यते, रुद्राणां माध्यन्दिनं सवनम् अन्तरिक्षलोकश्चेत्यपि ग्राह्यम्, आदित्यानां विश्वेषां देवानां च तृतीयसवनं स्वर्गलोकश्च क तर्हि यजमानस्य लोकः । तेषां वस्वादीनां तत्तल्लोकाधिपत्यादिति ब्रह्मवादिनः शिष्याः वदन्ति । आक्षेपवाचमाहुरित्यर्थः । भूलोकादिस्वामिवस्वादिषु स्थितहरिं[१] लोकद्वारादिवक्ष्यमाणमन्त्रैः प्रार्थ्य भूरादिवसुप्रभृतिलोकमेव यजमानो यातीति भावेन तत्र गुरुभिरुक्तं समाधिमाह – **स य इत्यादिना प्रयच्छन्तीत्यन्तेन खण्डत्रयेण** ॥ योऽधिकारी तल्लोकद्वारादिमन्त्रैर्वस्वादिस्थहरिप्रार्थनया तत्तद्वस्वादिलोकप्राप्तिरित्येतत् प्रमेयं न विद्यात् तर्हि सः अज्ञः कथं कुर्यात् । यज्ञादीति शेषः । अथ तस्मात् प्राप्यफलाज्ञाने तद्धेत्वनुष्ठानायोगाद् विद्वानुक्तमर्थं जानन्नेव कर्म कुर्यात् ॥ १ ॥

*( वसुस्थभगवद्रूपप्रार्थना )*

**पुरा प्रातरनुवाकस्योपकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवꣳ सामाभिगायति लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयꣳरा३३३३३ हु३म् आ३३ ज्या३ यो३ आ३२१११इत्यथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः**

---

१. 'स्थितं हरिं' क.

**प्रातःसवन९ सम्प्रयच्छन्ति** ॥ २ ॥

कर्मकृतौ विद्वानित्युक्तज्ञातव्यमाह– **प्रातरिति** ॥ प्रातरनुवाकस्य शस्त्रस्योपाकरणाद् उपक्रमात् पुरा पूर्वं गार्हपत्यस्य जघनेन पश्चाद्भागे उदङ्मुखः स्थिरमुपविश्य स यजमानः वासवं वसुगतवस्वादिनामक-भगवत्सम्बन्धि वासवं साम गायति गायेत् । तत्सामाऽऽह– **लोकेति** ॥ लोकस्य भूलोकस्य द्वारम् अपावृणु आवरणं तिरस्कुरु । वयं त्वा त्वां पश्येम । रा इत्यस्य राज्यायेत्यर्थलाभाय ज्यायेति पदेनान्वयः । तस्यार्थः भूलोकप्राप्तय इति । इति वस्वन्तर्गतवसुनामकं हरिं प्रार्थ्याथानन्तरं जुहोति अग्नयेऽग्न्यन्तर्गतायाग्निनाम्ने हरये नमः लोकक्षिते । तस्य विवरणं– **पृथिवीक्षित इति** ॥ भूलोकप्राप्तये यजमानाय त्वदाराधकाय मे मह्यं लोकं भूलोकं विन्द प्रापय । यद्वा, पृथिवीक्षित इत्यग्नय इत्यस्य विशेषणं, भूलोकस्वामिने इत्यर्थः । एवमग्रेऽपि । यजमानस्य लोको वै आयुषः परस्तात् । अत्र भूलोके एताऽस्मि यजमानोऽहं गन्ताऽस्मि । स्वाहापरिघं भूलोकप्राप्तिप्रतिबन्धकमनादिपरिघं भो अग्निगताग्निनामकहरे ! अपजहि तस्य हन्ता भव, इत्युक्त्वाऽग्निगं हरिं प्रार्थ्योत्तिष्ठति । तस्मै यजमानाय वसवो वसुगतास्तन्नामानो भगवद्रूपविशेषाः प्रातस्सवनं तत्सम्बन्धि भूलोकं प्रयच्छन्ति ॥ २ ॥

*( रुद्रस्थभगवद्रूपप्रार्थना )*

**पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेनाग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्र९ सामाभिगायति लो३कद्वारमपावा३-र्णू३३पश्येम त्वा वयं विरा ३३३३३ हु३म् आ३३ ज्या३ यो३ आ३२१११ इत्यथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति**

**तस्मै रुद्रा माध्यन्दिनꣳ सवनꣳ सम्प्रयच्छन्ति ॥ ३ ॥**

पुरेत्यादिखण्डद्वयमपि प्राग्वदेव योज्यम् । आग्नीध्रीयस्य आग्नीध्रीयाख्यदक्षिणाग्नेः रौद्रं रुद्रान्तर्गतरुद्रनामकहरिविषयं साम । तत्सामाऽऽह – **लोकेति** ॥ अत्रापि विरा इत्यस्य ज्याय इत्यनेन विराज्यायान्तरिक्षलोकप्राप्तये इत्यर्थलाभायान्वयः । अन्तरिक्षलोकप्राप्ति-बन्धकानादिपरिघनिवृत्तये वायुगतभगवत्प्रार्थनामाह – **नमो वायव इति** ॥ वायुगताय वायुनाम्ने हरये । रुद्राः रुद्रस्थाः । माध्यन्दिनं सवनम् अन्तरिक्षलोकम् ॥ ३ ॥

*( आदित्यविश्वेदेवस्थभगवद्रूपप्रार्थना )*

**पुरा तृतीयसवनस्योपाकरणाज्जघनेनाऽऽहवनीयस्योदङ्मुख उप-विश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति लो३कद्वार-मपावा३र्णू३३पश्येम त्वा वयꣳ स्वारा३३३३३ हु३म् आ३३ ज्या३ यो३ आ३२१११ इत्यादित्यमथ वैश्वदेवं लो३कद्वारमपावा३ र्णू३३ पश्येम त्वा वयꣳ साम्रा३३३३३ हु३ म् आ३३ ज्या३ यो३ आ३२१११ इत्यथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दतैष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनꣳ सम्प्रयच्छन्त्येष हवै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद ॥ ४ ॥ २४ ॥**

**॥ इति श्रीमच्छान्दोग्योपनिषदि द्वितीयोऽध्यायः ॥ २ ॥**

आदित्यमादित्यान्तर्गतविषयं वैश्वदेवं विश्वदेवान्तर्गतविषयं च ।

स्वारा इत्यस्य ज्यायेत्यनेन स्वाराज्याय स्वर्लोकाप्तय इत्यर्थलाभायान्वयः। आदित्येभ्यः आदित्यान्तःस्थेभ्यः । एवं विश्वेभ्यो देवेभ्य इत्यत्रापि । प्रवहत प्रवर्तयत तृतीयसवनं स्वर्लोकं वस्वाद्युपासनयैव यजमानः स्वर्गादि लभते किम् ? इत्यतस्तदन्तर्गतभगवदुपास्त्यैवेत्याह – **एष हवा इति ॥** योऽधिकारी एवमुक्तरीत्या वस्वादिस्थभगवदुपास्त्यैव तत्तल्लोकावाप्तिरिति वेद, स एव यज्ञस्य मात्रां, मातारं त्रातीति मात्राशब्दस्वाभाव्यात् स्त्रीत्वम् । यज्ञस्य निर्मातृपुरुषरक्षकं हरिं वेद स एव च स्वर्गादिभाङ् नान्य इति भावः । अत्र तात्पर्यं भाष्ये व्यक्तम् ॥ ४ ॥

**॥ इति चतुर्विंशः खण्डः ॥**

**इति श्रीमच्छान्दोग्योपनिषर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते द्वितीयोऽध्यायः समाप्तः ॥ २ ॥**

**अथ श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते तृतीयाध्याये प्रथमः खण्डः**

*( मधुविद्यानिरूपणम् )*

**॥ हरिः ॐ ॥ असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥**

वस्वादिदेवा उपासिता उपासकस्य निर्विघ्नं स्वर्गादि प्रयच्छन्तीत्युक्तम् । ते तु नानादितः स्वमहिम्नैव वसुपदादिमन्तः । 'वसुनामेवैको भूत्वा' इत्यादेः । अतः कस्यचिदुपास्त्येति वाच्यम् । कोऽसौ तदुपास्य इत्यतस्तदुपास्यं पञ्चविधं प्रपञ्चेनाऽह – **असौ वा इत्यादिना ॥** असौ आदित्वततत्वज्ञानरूपत्वहेतुभिरादित्यनामाऽऽदित्यस्थो विष्णुः देवमधु । मदः सुखानुभवोऽस्मिन् धीयते निर्धीयते इति मधु । सुखानुभवपूर्णो मधुशब्दार्थः । देवोपजीव्यत्वाद् देवमधु ।

प्रसिद्धमधुवदयमादित्यस्थो विष्णुर्देवोपजीव्यमध्वित्यर्थः । एतद्विद्यायाः हृद्यारोहाय प्रसिद्धमधुसादृश्यं सर्वमप्याह– **तस्येति** ॥ आदित्याख्य-मधुनो हरेः द्यौः प्रकाशादिगुणैर्द्युनाम्नी द्युस्था श्रीः, तिरश्चीनवंशः तिर्यक्स्थित्वा प्रणतिं कृत्वा वशे करोति हरिमिति तिरश्चीनवंश इत्युक्ता मध्वाश्रयापूपस्थानीयमारुताश्रयत्वात् तिर्यक्स्थितवंशस्थानीया । स्वान्तः सम्यग् हरीक्षणहेतुनाऽन्तरिक्षनामाऽन्तरिक्षस्थो वायुस्तिर्यग्वंशलग्न-मध्वाश्रयापूपः । आप्यो हरिरुपतिष्ठत्यत्रेति भगवत्सन्निधिविशेषयुक्त-त्वादपूप इत्युक्तः प्रसिद्धमधुपटलस्थानीयः । आदित्यनाम्न हरेर्मधुशब्दित-स्यान्तरिक्षे स्थितेरिति भावः । मरीचयः रश्मयः मरीचिषु स्थिताः । वसु-रुद्राद्याः मधुकारिणस्तत्पुत्राः मरीच्याद्याः मरीचिस्था इत्यर्थः ॥ १ ॥

*( मधुनामकवासुदेवोपासना )*

**तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः ॥ २ ॥**

तस्याऽदित्यस्य ये प्राञ्चः पूर्वदिगवस्थिता रश्मयो रश्मिषु स्थिताः रतिशंमानरूपत्वहेतुना रश्मिनामा वासुदेवः, ता एव विधेयापेक्षया स्त्रीत्वम् । बहुवचनमधिष्ठानबहुत्वाद् रूपबाहुल्याद् वा । रश्मिषु स्थित-स्तन्नामा, वासुदेव एवेति यावत् । अस्य मध्वपूपस्य प्राच्यो मधुनाड्यः पूर्वदिगवस्थितमधुनाडीषु स्थितोंऽशिनं मूलरूपमाप्तुमंशैर्वासुदेवादि-भिर्विना नालं न समर्थः पुमानिति व्युत्पत्त्या नाडीनामा । लडयोरभेदात् । स्त्रीत्वं शब्दस्वाभाव्यात् । बहुवचनं प्राग्वत् । एवमग्रेऽपि । ऋचः ऋग्वेदमानिनः । प्रातःसवनेऽर्च्यत्वहेतुना ऋङ्नामानो वह्न्याद्या वसवो मधुकृतो मधुनामकविष्णुव्यक्तिकृत्त्वात् मधुमक्षिकानिभाः । **ऋग्वेद एव पुष्पं** ज्ञानपोषकत्वात् पुष्पमित्युक्तः प्रसिद्धपुष्पनिभः । ता आपः, आ

समन्तात् पीयन्ते विचार्यन्ते देवैरित्यपूशब्दिता ऋच एवामृताः नित्यत्वादमृता इत्युक्ताः । प्रसिद्धामृतनिभाः ता वा एता ऋचो ऋङ्मानिनो ऋङ्नामानो वसवः ॥ २ ॥

**एतमृग्वेदमभ्यतप९ँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य९ँ रसोऽजायत ॥ ३ ॥**

एतमृग्वेदमभ्यतपन् श्रवणमननादिभिर्व्यचारयन् । अभितप्तस्य विचारितस्य तस्य वेदस्य सकाशाद् यशः ज्ञानानन्दात्मकः, तेजः प्रकाशरूपः, इन्द्रियं परमैश्वर्यरूपः, वीर्यं सर्वानुग्रहशक्तः, अन्नाद्यं बल-रूपः, रसः श्रेष्ठः, अन्नाद्यं सर्वानुग्रहशक्तः, रसो बलरूप इति वाऽर्थः । वासुदेवाख्यो हरिरजायत अभिव्यक्तोऽभूत् ॥ ३ ॥

**तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद् यदेतदादित्यस्य रोहित९ँ रूपम् ॥ ४ ॥ १ ॥**

तद् यशःप्रभृतिगुणयुक्तं रसशब्दितं वासुदेवाख्यं ब्रह्म धर्ममोक्षादीन् देवानां व्यक्षरत् प्रादात् । तद् वासुदेवाख्यं ब्रह्म, आदित्यमभितः आदित्यप्राग्रश्मीन्, अश्रयत् तत्रातिष्ठत् । तद्वै ऋग्वेदोक्तं वासुदेवाख्यं ब्रह्म । एतद्वै यदादित्यस्य लोहितं[१] रूपं लोहिताकारं सत् प्राग्रश्मिगत-लोहितरूपगमिति ॥ ४ ॥ **इति प्रथमः खण्डः ॥**

## ॥ अथ द्वितीयः खण्डः ॥

*( मधुनामकसङ्कर्षणोपासना )*

**अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजू९ँष्येव मधुकृतो यजर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥**

१. 'रोहितम्' क.

अथ सङ्कर्षणाख्यरूपोपासनोक्तिरारभ्यत इत्यर्थः । य एवास्याऽदित्यस्य दक्षिणाः दक्षिणदिगवस्थिताः, रश्मयो रश्मिगताः रतिशंमानरूपतया रश्मिनामकः सङ्कर्षणः । बहुवचनं प्राग्वत् । ता एव तत्रत्यसङ्कर्षण एव अस्य मध्वपूपस्य दक्षिणा नाड्यो दक्षिणमधुनाडीस्थः । प्रागुक्तव्युत्पत्त्या नाडीनामकः । बहुवचनं प्राग्वत् । यजूंष्येव यजुर्मानिनो वायुमुखा रुद्राः मध्वाख्यहरिव्यञ्जकत्वान्मधुमक्षिकानिभाः । यजुर्वेद एव पुष्पं, ज्ञानपोषकत्वात् पुष्पमित्युक्तः । प्रसिद्धपुष्पकल्पं तस्यापि भ्रमरपोषकत्वात् । आपः प्रागुक्तनिरुक्त्या यजूंषि ता आपः ॥ १ ॥

**तानि वा एतानि यजूꣳष्येतं यजुर्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥**

तानि यजूंषि यजुर्वेद इति यावत् । अमृता नित्यत्वादमृतशब्दिताः प्रसिद्धपुष्पामृततुल्याः । तानि वा एतानि यजूंषि यजुर्मानिनो वायुमुखा रुद्राः एतं यजुर्वेदमभ्यतपन् व्यचारयन् । तस्य विचारितस्य सकाशात् । यश इत्यादि प्राग्वत् । रसः सङ्कर्षणः ॥ २ ॥

**तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य शुक्लꣳरूपम् ॥ ३ ॥ २ ॥**

तत् सङ्कर्षणाख्यं ब्रह्म । आदित्यमभितो दक्षिणरश्मीनश्रयत् तत्रातिष्ठत् । तत् सङ्कर्षणरूपमेतद्वै । यदादित्यस्य शुक्लं रूपं शुक्लवर्णं सत् शुक्लरूपगमेतदित्यर्थः ॥ ३ ॥ **इति द्वितीयः खण्डः ॥**

**॥ अथ तृतीयः खण्डः ॥**

*( मधुनामकप्रद्युम्नोपासना )*

**अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः**

**सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥**

॥ **अथेति** ॥ प्रद्युम्नस्योपास्तिप्रकार उच्यत इत्यर्थः । अस्याऽदित्यस्य ये प्रत्यञ्चो रश्मयः प्रत्यग्रश्मिस्थो रश्मिनामा प्रद्युम्नः स एवास्य मध्वपूपस्य प्रतीच्यो मधुनाड्यः प्रत्यङ्मधुनाडीस्थो मधुनाडीनामकः । सामान्येव सामाभिमानिनः मासेषु समभोगतया सामनामानः विष्णुवर्जिता इन्द्रमुखाः सर्वे आदित्याः । मधुकृत इत्यादि सर्वं प्राग्वत् ॥ १ ॥

**तानि वा एतानि सामान्येतꣳ सामवेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥**

सामानि सामाभिमानिनः प्रागुक्ताः ॥ २ ॥

**तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद् यदेतदादित्यस्य परं कृष्णꣳ रूपम् ॥ ३ ॥ ३ ॥**

तत् सामवेदोदितं प्रद्युम्नरूपं एतद्वै यदेतदादित्यस्य कृष्णं रूपं श्यामवर्णं सत् कृष्णरूपगम् ॥ ३ ॥ इति तृतीयः खण्डः ॥

॥ अथ चतुर्थः खण्डः ॥

*( मधुनामकानिरुद्धोपासना )*

**अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः ॥ १ ॥**

अथेति प्राग्वत् । अस्याऽदित्यस्य ये उदञ्चो रश्मयो रश्मिस्थो रश्मिनामकोऽनिरुद्धः । ता वै सोऽनिरुद्ध एव अस्य मध्वपूपस्योदग्दिगवस्थितमधुनाडिगतो नाडीनामकः । अथर्वाङ्गिरस एव अधरं

वर्तयन्ति वृष्टिं मनःप्राणाभिमानितयाऽङ्गानां रसश्चेति अङ्गिरोनामकाः इतिहासपुराणाथर्ववेदमानिनः सोममुखा मरुतो मधुकृतः । इतिहास-पुराणं द्वन्द्वैकवद्भावः । ता एवाऽपः आपीयन्त इत्यब्शब्दिते-तिहासादिवाक्यान्येवामृताः प्रसिद्धामृतनिभानि ॥ १ ॥

**ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपꣳस्तस्याभि-तप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥**

ते वा इत्यादि प्राग्वत् ॥ २ ॥

**तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद् यदेतदादित्यस्य परः कृष्णꣳ रूपम् ॥ ३ ॥ ४ ॥**

आदित्यमभितः उदग्ररश्मीनश्रयत् । तद् इतिहासपुराणाथर्ववेदोक्त-मनिरुद्धाख्यं रूपमेतद्वै । यदादित्यस्य परः कृष्णम् अत्यन्तनीलं रूपं सुनीलवर्णं सदत्यन्तनीलरूपगतं एतद्वै इति ॥ ३ ॥ इति खण्डः ४ ॥

## ॥ अथ पञ्चमः खण्डः ॥

*( मधुनामकनारायणोपासना )*

**अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवाऽदेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ॥ १ ॥**

॥ **अथेति** ॥ ऊर्ध्वा रश्मयो रश्मिनामको नारायणः । गुह्यादेशाः, सर्वगुह्योपदेष्टृतया गुह्यादेशा इत्युक्ताः ब्रह्ममुखाः सर्वे ऋजवो ब्रह्मैव वेदराशिरेव । ता एवाऽपो वेदवाचो अमृताः ॥ १ ॥

**ते वा एते गुह्या आदेशा एतद् ब्रह्माभ्यतपꣳस्तस्याभितप्तस्य**

**यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥**
**तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद् यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥**

तत् सर्ववेदोक्तं नारायणाख्यं रूपं प्रोद्यदादित्यवर्णं सद् आदित्यस्य[१] मध्ये महामरीचिपुञ्जेन क्षोभत इवाचलोऽपि चलतीवाऽस्ते ॥ २ ॥ ३ ॥

**ते वा एते रसानाꣳरसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥ ५ ॥**

ते वा एते वासुदेवाद्याः पञ्चभगवद्रूपविशेषा रसानां रसाः । तद् व्यनक्ति– **वेदा हि रसा इति** ॥ तानि वा एतानि वासुदेवादिरूपाणि तेषाममृतानां नित्यानां वेदानाममृतानि नित्यताप्रदानि ॥४॥खण्डः-५॥

**॥ अथ षष्ठः खण्डः ॥**

( *मधुनामकवासुदेवोपासना* )

**तद् यत् प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

एवं पञ्चरूपिणं भगवन्तं मधुतयोक्त्वा अधुना के कस्य सेवकाः किं च तेषां तत्फलमित्यतः तत्सर्वं पञ्चभिः पर्वभिराह– **तद्यदिति** ॥ तत् प्रागुक्तं यत् प्रथमममृतं वासुदेवाख्यं तद्वसव उपजीवन्ति पश्यन्ति अग्निना मुखेन । देवा वसवः तद्दर्शनपर्यन्तं नवै नैवाश्नन्ति । न पिबन्त्यन्य-

---

१. आदित्यमण्डलस्येत्यर्थः ।

भोगहीना वर्तन्ते । एतदेत्रामृतं वासुदेवं दृष्ट्वा तृप्यन्ति ॥ १ ॥

**त एतदेव रूपमभिसंविशत्येतस्माद् रूपादुद्यन्ति ॥ २ ॥**

ते वह्न्याद्या वसवः एतदेव वासुदेवरूपम् अभि स्वेच्छया संविशन्ति मुक्ताः सन्तः प्रविशन्ति । एतस्माद् रूपात् स्वेच्छयोद्यन्ति निर्गच्छन्ति ॥ २ ॥

**स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति ॥ ३ ॥**

एवं प्राप्तपदानां वसूनां मुक्तिरूपफलमुक्त्वाऽधुना प्राप्स्यमान-पदानां तत्पदयोग्यानां मधूपास्त्या तत्पदप्राप्त्यादिकं फलमाह – **स इति** ॥ योऽधिकारी एतदेवामृतं वासुदेवाख्यं वेद । स ज्ञानी वसूनामेव मध्ये एको भूत्वा वसुपदवीं प्राप्याग्निनैव मुखेनैतदेवामृतं वासुदेवं दृष्ट्वा तृप्यति । स पश्चान्मुक्तावेतदेव रूपं वासुदेवं संविशति । स्वेच्छयैवैतस्माद् रूपादुदेति, बहिर्गच्छति ॥ ३ ॥

**स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥ ६ ॥**

**'वसूनामेवैको भूत्वा'** इति मधूपासकस्य वसुपदप्राप्तिरुक्ता । तत् किं रूपमिति जिज्ञासायामाह – **स यावदिति** ॥ स वसुपदयोग्यो वासुदेवज्ञानी आदित्यः पुरस्ताद् उदयाद्रौ उदेता दृष्टिविषयो भवन् यावत्कालं यावद्देशं वा सञ्चरन् पश्चादस्ताद्रावस्तमदर्शनम् एता गन्ता भवति, वसूनां तावद्देशतावत्कालाधिपत्यं स्वाराज्यं भोगं च पर्येता प्राप्ता भवतीत्यर्थः । अत्रावान्तरविशेषः **'पुनर्विशेषतो दत्तम्'** इत्यादिभाष्याद् ज्ञेयः ॥ ४ ॥ **इति षष्ठः खण्डः ॥**

## ॥ अथ सप्तमः खण्डः ॥

*( मधुनामकसङ्कर्षणोपासनाफलम् )*

**अथ यद् द्वितीयममृतं तद् रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति ॥ २ ॥**

अथ यद् द्वितीयमित्यादिखण्डचतुष्टयेऽप्येवमेवार्थो ध्येयः । द्वितीयममृतं सङ्कर्षणाख्यम् उपजीवन्ति पश्यन्ति इन्द्रेण मुखेन वायुना मुखेन ॥ १ ॥ २ ॥

**स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति ॥३॥**

'स य एतदेवामृतं वेद' इत्यादेः पूर्वत्रेव गमनिका तद्वदेवार्थश्च ज्ञेयः । इन्द्रेणैव वायुनैव ॥ ३ ॥

**स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद् दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥**

रुद्राणां कियद्देशमियत्कालाधिपत्यमित्यत आह– **स इत्यादिना** ॥ स द्वितीयामृताख्यसङ्कर्षणज्ञानी रुद्राणां तावदाधिपत्यं स्वाराज्यं पर्येतेत्यन्वयः । कियद्देशकालमाधिपत्यं रुद्राणामित्यतो वसुभोज्य-देशकालयोर्द्विर्देशकालमित्याह – **दक्षिणत इत्यादिना** ॥ आदित्यस्य मेरुं प्रदक्षिणीकृत्य सञ्चरतोऽस्तगिरावेतद्देशीयानामदर्शनं प्राप्तस्य मेरोः पश्चिमभागे दक्षिणदेशादुत्तरदेशं गच्छतो दक्षिणोत्तरदेशयोर्यथाक्रमं उदयास्तमयौ मेरुपश्चिमभागस्थजनानां भवतः । तत्र तत्र मानसगिरौ

निम्नोन्नतस्थलसत्त्वादुदायास्तमयौ ध्येयौ । तथा चाऽदित्यो यावद्दक्षिणत उदेतोत्तरतोऽस्तमेता । मेरुपश्चिमदेशगतजनानां दक्षिणतो दृष्टिविषयो भूत्वा यावद्देशकालं गच्छन् तत उत्तरदेशे किञ्चिद् दिशि गत अदर्शनं प्राप्नोति, तावद्देशकालं रुद्राणामाधिपत्यम् । कियद्देशकालं मेरुपश्चिमभागे दक्षिणतः उत्तरदिग्गमनमित्यतस्तद्देशकालपरिमाणमाह– **यावदिति** ॥ उदयाद्रौ उदेत्य पश्चिममस्तं यावद्देशकालं याति, तावद्देशकालं द्विर्द्विगुणितं भवेदिति रुद्रभोज्यदेशकालाद् द्विगुणितो भवेत् । रौद्रदेशकालद्विगुणितो वसुकालो यावान् तावान् भवतीति तदर्धदेशः अर्धरात्रकालश्च रुद्रभोज्याविति फलितोऽर्थः ॥ ४ ॥ ७ ॥

## ॥ अथ अष्टमः खण्डः ॥

*( मधुनामकप्रद्युम्नोपासनाफलवर्णनम् )*

**अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति ॥ २ ॥**

तृतीयममृतं प्रद्युम्नाख्यं वरुणेन वरणीयत्वहेतुना इन्द्रेण ॥ १ ॥ २ ॥

**स य एतदेवममृतं वेदाऽदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति ॥ ३ ॥**

वरुणेनैव इन्द्रेणैव ॥ ३ ॥

**स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत् पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यं स्वाराज्यं**

**पर्येता ॥ ४ ॥ ८ ॥**

एवं दक्षिणत उदेत्योत्तरतोऽस्तङ्गतो रविर्यदा मेरुपश्चिमदेशीयानामस्तङ्गतो यदाऽस्तङ्गतदेशात् मेरुवायव्यभागात् पश्चिमात् पूर्वं देशं मेर्वीशान्यभागं प्रत्यायाति, तदा मेरूत्तरभागस्थानां जनानां पश्चिमपूर्वावुदयास्तमयदेशौ, तावद्देशकालावादित्यभोग्यौ रौद्रदेशकालार्धदेशकालावित्याह – **स यावदित्यादिना** ॥ पश्चादिति वाक्येऽपि यावदिति ग्राह्यम् । पश्चादुदेत्य पुरस्तादस्तं यावद्देशकालं याति, तावद्देशकालमादित्यानामाधिपत्यम् । तदेव कियदित्यत उक्तं यावदिति । दक्षिणोत्तरयोरुदयास्तमयदेशकालौ आदित्यदेशकालाद् द्विगुणितौ सन्तौ यावन्तौ भवतः तावदिति । रुद्रोपभोग्यदेशकालार्धदेशकालाविति यावत्

॥ ४ ॥ **इति अष्टमः खण्डः ॥**

## ॥ अथ नवमः खण्डः ॥

*( मधुनामकानिरुद्धोपासनाफलम् )*

**अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन नवै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति ॥ २ ॥**

**स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति ॥ ३ ॥**

चतुर्थममृतमनिरुद्धाख्यं ॥ १ ॥ २ ॥ ३ ॥

**स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता**

**दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥ ९ ॥**

मरुतामादित्योपभोग्यदेशकालार्धदेशकालाधिपत्यमित्याह– **स यावदादित्य इत्यादिना** ॥ पूर्ववद् योजना । उत्तरतो मेरोरीशान्यभागादुत्तरदेशीयानामस्तमयदेशाद् दक्षिणतो मेरोः किञ्चिदाग्नेयभागेऽस्तमेता । मेरोः पूर्वदेशीयानाम् उत्तरदक्षिणयोरुदयास्तमयौ भवतः ॥ ४ ॥ **इति नवमः खण्डः** ॥

## ॥ अथ दशमः खण्डः ॥

*( मधुनामकनारायणोपासनाफलम् )*

**अथ यत्पञ्चमममृतं तत् साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति ॥ २ ॥**

**स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति ॥ ३ ॥**

पञ्चमममृतं नारायणाख्यम् । साध्याः साध्यनामकाः ब्रह्मपदयोग्याः ऋजवः । सुपर्णशेषसरस्वतीसुपर्णावारुण्यश्च । ब्रह्मणा विरिञ्चेन ॥ १ ॥ २ ॥ ३ ॥

**स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्व उदेताऽर्वाङस्तमेता साध्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥ १० ॥**

मरुतामुपभोग्यदेशकालार्धदेशकालौ साध्यनामकानामित्याह – **स यावदित्यादिना** ॥ मेरोः किञ्चिदाग्नेययुक्तपूर्वभागे ह्यैन्द्रपुरम् । तत्रोदयगिरौ निम्नोन्नतभागोऽस्ति । तत्राऽदित्य उदयाद्रेरूर्ध्वभागादधोभागं यदा याति तद्देशस्थानामूर्ध्वमुदयोऽधोऽस्तमयः । तद्देशकालौ मरुद्देशकालार्धदेशकालौ साध्योपभोग्यौ ॥ ४ ॥ **इति दशमः खण्डः** ॥

**॥ अथ एकादशः खण्डः ॥**

*( प्रलये भगवत उदयास्ताभावसमर्थनम् )*

**अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः ॥ १ ॥**

प्रलये तु भगवान् कथं तिष्ठतीत्यत आह– **अथेति** ॥ स्थित्यनन्तरम् । ततः सूर्यमण्डलादूर्ध्वं उदेत्योद्गत्योर्ध्वं गतः सन् वैकुण्ठलोकं प्राप्य नैवोदेता नास्तमेता एकल एव एकप्रकार एव अद्वितीय एवेति वा । मध्ये प्रलये स्थाता । तत्र उक्तेऽर्थे एष वक्ष्यमाणः श्लोकः संवादी भवति ॥ १ ॥

**न वै तत्र न निम्लोचो नोदियाय कदाचन । देवास्तेनाह९ सत्येन मा विराधिषि ब्रह्मणेति ॥ २ ॥**

न वै नैव तत्र वैकुण्ठलोके । तत्र किं नैवेत्यत उदयास्तमयौ नैवेति । तद् व्यनक्ति – न निम्लोचो नास्तमयः, कदाचन नोदियाय उदयहीनः । हे देवाः ! तेन सत्येन ब्रह्मणा हरिणा तत्प्रसादेनेति यावत् । अहं मा विराधिषि, देवतात्वसिद्धिराहित्यं न प्राप्नुयामित्यर्थः । इतिशब्दः श्लोकसमाप्तौ ॥ २ ॥

**न हवा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ॥ ३ ॥**

एतद्विद्यावेदिनः महत्त्वं प्रकाशयन् मोक्षफलमाह– **न हवा इति ॥** योऽधिकारी एतां ब्रह्मोपनिषदं ब्रह्मप्रतिपादिकां मधुविद्यां वेद अस्मै ज्ञानिने न हवा उदेति न निम्लोचति । तस्य तात्पर्योक्तिः सकृद् दिवा हैवास्मै भवतीति । मुक्तस्य वैकुण्ठं प्राप्तस्य नित्यं दिवैव भवतीत्यर्थः ॥ ३ ॥

**तद्धैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्त-द्धैतदुद्दालकायाऽरुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥**

महदुपदेशपरम्परागता चैषेति विद्यां प्रशंसति – **तद्धैतदिति ॥** तदेतदादित्याख्यं पञ्चविधदेवमध्वाख्यं ब्रह्मरूपं ब्रह्मा भगवान् विष्णुः प्रजापतये विरिञ्चये उवाच । प्रजापतिर्मनवे । मनुः प्रजाभ्यः । उवाचेति सर्वत्रानुषङ्गः । तद्धैतद् ब्रह्म उद्दालक आरुणये ज्येष्ठाय पुत्राय प्रोवाच (स्म) ॥ ४ ॥

**इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वाऽन्तेवासिने ॥ ५ ॥**

तत् तस्मात् सम्प्रदायागतत्वाद् अद्यतनोऽपि पिता प्रणाय्याय प्रणयवते ज्येष्ठपुत्राय अन्तेवासिने वा इदं ब्रह्म प्रब्रूयात् ॥ ५ ॥

**नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥ ६ ॥ ११ ॥**

नान्यस्मै कस्मैचनेति । एतद्विद्योपदेष्टुः सदृशगुरुदक्षिणाभावाच्चैषा महतीत्याह – **यदीति ॥** अस्मै एतद्विद्योपदेष्ट्रे धनस्य धनेन पूर्णां, अद्भिः सप्तसमुद्रैः परिगृहीतां परिवृतामपीमां पृथिवीं यदि दद्यात् । **एतदेव** मधुविद्यादानमेव । ततस्तादृशगुरुदक्षिणातः भूयः अधिकं तद्विद्यादानाय

दक्षिणा नैव पूर्यत इत्यर्थः । इतिशब्दः समाप्तौ । द्विरुक्तिस्तात्पर्यज्ञप्त्यर्था ॥ ६ ॥ इति एकादशः खण्डः ॥

## ॥ अथ द्वादशः खण्डः ॥

*(हयग्रीवमत्स्यादिरूपवाग्रूपानामुपासनम् )*

*( गायत्रीप्रतिपाद्यसूर्यान्तर्गतभगवदुपास्तिः )*

**गायत्री वा इदꣳ सर्वं भूतं यदिदं किञ्च वाग् वै गायत्री वाग् वा इदꣳ सर्वं भूतं गायति त्रायते च ॥ १ ॥**

सूर्यान्तर्गतस्य हरेः सर्ववेदप्रतिपाद्यत्वेन प्रकृतस्य वेदमातृगायत्री-नामार्थत्वेनोपास्तिमाह – **गायत्रीत्यादिना** ॥ यदिदं किञ्च सर्वं सर्वान्तर्गतं भूतं प्रभूतं परिपूर्णं मत्स्याद्यवतारजातम् इदं सर्वं गायत्री वै गायत्र्यां संस्थितः सन् गायत्रीनामकः स्त्रीरूपः सूर्यसप्रभो भगवान् वै प्रसिद्धम् । गायत्र्यनुपक्तवागादिनिष्ठानि भगवदुपास्त्यन्तराण्याह – **वाग् वै गायत्रीति** ॥ गायत्रीनामा हरिः वाग् वै । वक्तीति व्युत्पत्त्या वाङ्नामा स्त्रीरूपो वाचि स्थितो हयशीर्षो वै । कुतः? इदं सर्वं भूतं देशकालगुणपरिपूर्णं मत्स्याद्यवतारजातं वाग् वै? हयशीर्षाख्यं तदभिन्नं वै यतोऽतस्तदभिन्नं गायत्रीरूपात्मकमित्यर्थः । केन निमित्तेन गायत्रीनामा हरिरित्यत आह – **गायति च त्रायते चेति** ॥ निखिल-वेदानुच्चारयति त्रायते च जगदिति गायत्रीत्यर्थः । एतेन वर्णसमावेशे रूढगायत्रीपदस्य कथं योगेनापहार इति निरस्तम् । वाचनिक-योगस्याङ्गरूढितो वलवत्त्वस्य **'कम्पनात्'**(ब्र.सू. १-३-३९) इत्यत्र सिद्धत्वात् । तदुक्तं सूत्रे **'छन्दोभिधानात्'**(ब्र.सू.१-१-२७) इत्यादौ ॥ १ ॥

*( पृथिव्याख्यतुरीयभगवद्रूपोपासना )*

**या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्याँ हीदँ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयन्ते ॥ २ ॥**

या वै सा प्रसिद्धा गायत्री गायत्रीनामा हरिः, इयमेव सा । या इयं पृथिवी पृथुत्वहेतुना पृथिवीनामा पृथिव्यां स्थितः स्त्रीरूपः पीतवर्णो हरिः सा पृथिवी इयमेव । गायत्रीनामको भगवानेव । न मात्रयाऽपि तद्रूपयोर्भेदोऽस्तीत्येवकारार्थः । कुतोऽस्य पृथिवीपदनिर्दिष्टस्य ब्रह्मतेत्यतस्तल्लिङ्गद्वयादिति भावेन लिङ्गद्वयमाह– **अस्यामिति** ॥ पृथिव्यां पृथिवीनाम्नि हरौ इदं प्रमाणप्रमितं सर्वं भूतं जगत् प्रतिष्ठितं तदधीनसत्ताप्रवृत्तिप्रतीत्यादिमत् । एतेन पूर्वत्र भूतपदस्य मत्स्याद्यवतारार्थकत्वादिह जगदर्थत्वस्वीकारे प्रकृतत्यागाप्रकृतस्वीकारौ स्यातामिति निरस्तम् । उपजीवकत्वश्रवणरूपबाधकेन प्रकृतत्यागस्यादोषत्वात् । एतामेव पृथिवीमेव पृथिवीनामकं हरिं नातिशीयन्ते केऽपि नातिशेरते । अयमेव सर्वातिशयी, सर्वोत्तम इति यावत् । सर्वाश्रयत्वसर्वोत्तमत्वलिङ्गद्वयात् पृथिवीनामा हरिरेवेति भावः ॥ २ ॥

*( शरीराख्यपञ्चमभगवद्रूपोपासना )*

**या वै सा पृथिवीयं वाव सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३ ॥**

या वै सा प्रसिद्धा पृथिवी पृथिवीनामा हरिः सा इयमेव । यदिदमस्मिन् पुरुषे जीवे अन्तश्शरीरं शंरूपत्वरतिरूपत्वजगत्प्रेरणहेतुभिः शरीरनामा देहान्तःपुरुषशब्दितं जीवमभिव्याप्य स्थितो योऽयं वर्तते इयमेव सा अयमेव सः पृथिवीशब्दित इत्यर्थः ।

शरीरशब्दितस्य विष्णुत्वे पूर्ववदेव लिङ्गद्वयमाह – **अस्मिन्निति** ॥ शरीरशब्दिते । प्राणा इन्द्रियाणि प्राणादिवायवश्च ॥ ३ ॥

*( हृदयाख्यषष्ठभगवद्रूपोपासना )*

**यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते** ॥ ४ ॥

हरेर्जीवहृदयाधिष्ठितत्वं तन्नामकत्वं चाऽऽह – **यद्वै तदिति** ॥ पुरुषे जीवे । जीवं व्याप्य स्थितं शरीरनामकं भगवद्रूपमन्तः पुरुषे जीवान्तर्हृदयं हृद्यते तिष्ठतीति व्युत्पत्त्या हृदयस्थं हरे रूपं तदिदमेवेति योजना । हृदयनाम्नो विष्णुत्वेऽपि लिङ्गद्वयमाह – **अस्मिन्निति** ॥ ४ ॥

**सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाऽभ्यनूक्तम्** ॥ ५ ॥

एवं गायत्रीभूतवाक्पृथिवीशरीरहृदयलक्षणषड्विधत्वमुक्त्वा तदनुवदंश्चतुर्विधत्वमाह– **सैषेति** ॥ सैषा षड्विधा गायत्री चतुष्पदा ॥ आत्मना सह षड्विधगायत्रीशब्दितहरिश्चतुष्पदा पादचतुष्टयोपेतेति योजना । छान्दसत्वात् 'टाबृचि' इति सूत्रे ऋचीत्युक्तमनादृत्य चतुष्पदेति टाबेव कृतः । प्रतिज्ञातं चतुष्पात्त्वं व्यनक्ति– **तदेतदिति** ॥ गायत्रीनाम्नो हरेश्चतुष्पात्त्वं ऋचा अभि सम्यगुक्तम् ॥ ५ ॥

*(भगवतो पादचतुष्टयविवृतिः)*

**तावानस्य महिमा ततो ज्यायाँश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति** ॥ ६ ॥

तदाह – **तावानिति** ॥ अस्य पुरुषस्य सहस्रशीर्षत्वादिना पूर्वोक्तो महिमा तावान् । काकुस्वरत्वादेतावानेव न भवतीत्यर्थः । किन्तु ततो

ज्यायांश्च पूरुषः । ज्यास्त्वमेवाऽह– **पाद इति** ।। अस्य पुरुषनाम्नो हरेः सर्वा सर्वाणि भूतानि जीवचेतनानि एकः पादः । अस्य त्रिपात् अमृतम्[१]। पादत्रयं नारायणवासुदेववैकुण्ठनामकम् । दिवि द्योतमान-तया चित्प्रकृत्यात्मकत्वेन वा लक्षयोजनान्तरिक्षलोकादुपरिस्थिततया वा द्युशब्दिते श्वेतद्विपानन्तासनवैकुण्ठनामके दिवि क्रमात् तिष्ठतीत्यर्थः । तदाह सूत्रे–**'भूतादिपादव्यपदेशोपपत्तेश्चैवम्'** इति (ब्र.सू.१-१-२६) । एतेन पुरुषसूक्तोक्तो गायत्रीपदोक्तश्चैक इति दर्शितम् । अन्यथाऽसङ्गतेः ।। ६ ।।

*( प्रकारान्तरेण भगवतः पादचतुष्टयविवृतिः )*

**यद्वैतद् ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः ।। ७ ।।**

प्रकारान्तरेण गायत्रीनाम्नो हरेश्चतुष्पात्त्वमाह – **यद्वैतदिति** ।। यद्वेति पक्षान्तरे । एतद् गायत्र्याख्यं रूपं ब्रह्म, सर्वगतरूपात्मकमित्यर्थः । स एकः पादो गायत्रीनाम्न इत्यर्थः । इदं सर्वगतं ब्रह्म वाव सर्वगतं ब्रह्मैव पुरुषात् स्वयं जीवाद् बहिर्धा बहिः शरीरहृदयाकाशगत आकाशनामा योऽयं वर्तते अयं तत् स इत्यर्थः । स द्वितीयपाद इति ज्ञेयम् । एतस्य जीवान्तर्व्यापिरूपाभेदमाह – **योऽयं बहिर्धेति** ।। योऽयं बहिर्धा पुरुषात् शरीरहृदयाकाशगत आकाशनामा अयं वाव सः ।। ७ ।।

**अयं वाव स योऽयमन्तःपुरुष आकाशो यो वै सोऽन्तःपुरुष आकाशः ।। ८ ।।**

स कः ? योऽयमन्तःपुरुषे जीवान्तःस्थिताकाशगत आकाशनामा

१.स्वरूपभूतमित्यर्थः ।

जीवान्तर्व्याप्तोऽस्ति स इत्यर्थः । स तृतीयपादो गायत्रीनाम्नः । तस्य चतुर्थपादस्थानीयजीवचैतन्यहृदयाकाशगतेनाभेदमाह – य इति ॥ यो वै सोऽन्तःपुरुष आकाशनामा हरिर्यो वर्तते अयं वाव सः । स कः ? सोऽयमन्तर्हृदय आकाशो जीवहृदयान्तर्वर्त्याकाशगतः आकाशनामा यो वर्तते अयं स इत्यर्थः । एवं वा चतुष्पात्त्वमिति यद्वेत्यस्यार्थः । मन्त्रोक्तचतुष्पात्त्वपक्षे जीवः भिन्नपादः । पादत्रयं तु स्वरूपात्मकमिति वैरूप्यम् । अस्मिन् पक्षे तु सर्वगतजीवशरीरहृदयाकाशगतजीवान्तर्व्याप्यस्थितजीवचैतन्यहृदयाकाशगतरूपचतुष्टयस्यापि स्वरूपात्मकपादत्वमिति सारूप्यम् ॥ ८ ॥

**अयं वाव स योऽयमन्तर्हृदय आकाशो यो वै सोऽन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीꣳ श्रियं लभते य एवं वेद ॥ ९ ॥ १२ ॥**

एवं षड्विधत्वादिना निरूपितस्य हरेः स्वरूपमाह – **तदेतदिति** ॥ तदेतत् षड्विधत्वादिनोक्तं भगवद्रूपं पूर्णम् अप्रवर्ति अन्यैर्न प्रवर्त्यत इत्यप्रवर्ति, स्वतन्त्रमिति यावत् । ज्ञानिनः फलमाह – **पूर्णामिति** ॥ पूर्णां भगवदन्याप्रवर्तिनीं श्रियं लभते योऽधिकारी ब्रह्मा एवमुक्तरूपेण गायत्र्याख्यं रूपं वेदेति ॥ ९ ॥ इति द्वादशः खण्डः ॥

**॥ अथ त्रयोदशः खण्डः ॥**

*(हृदयनामकपरमात्मनः द्वारपालकाः)*

*( पूर्वद्वारपालकः सूर्यः )*

**तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत् तेजोऽन्नाद्यमित्युपासीत**

**तेजस्व्यन्नादो भवति य एवं वेद ॥ १ ॥**

यदिदमस्मिन्नन्तःपुरुषे हृदयमिति, योऽयमन्तर्हृदय आकाश इति च हृत्पुरगतत्वेन प्रकृतस्य हरेरुपास्तिं तत्पुरद्वारपमहिमोपास्तिफलाना-मुक्त्याह – **तस्येति** ॥ तस्यैतस्य भगवदधिष्ठितहृदयस्य पञ्चदेवसुषयो देवनिर्गमद्वाराणि । क्रमेण पञ्चद्वाराणि द्वारपांश्चाऽह – **स य इति** ॥ स प्रसिद्धो योऽस्य हृदयस्य प्राङ्सुषिः पूर्वद्वारं, सः तद्द्वारपः प्राणः श्वासवायुमानी । सोऽपि कः ? इत्यत आह – **तच्चक्षुरिति** ॥ विधेयापेक्षया तदिति नपुंसकम् । एवमग्रेऽपि । तत् स प्राणमानी चक्षुश्चक्षुरभिमानी सोऽपि कः ? आह स चक्षुर्मानी **आदित्य इति** ॥ तदेतत् तमेतं प्राणचक्षुर्मान्यादित्यं पूर्वद्वारपं तेजोन्नाद्यं तेजोन्नाद्यभिमानीत्युपासीत । तदुपास्तेः फलमाह – **तेजस्वीति** ॥ व्यक्तोऽर्थः ॥ १ ॥

*( दक्षिणद्वारपालकश्चन्द्रः )*

**अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमा-स्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान् यशस्वी भवति य एवं वेद ॥ २ ॥**

अथेत्यर्थान्तरे । अस्य हृदयस्य यो दक्षिणः सुषिः दक्षिणद्वारं स तद्द्वारपः व्यानः व्यानाख्यवाय्वभिमानी । श्रोत्रमानी च । स चन्द्रमाः तदेतत् तमेतं व्यानश्रोत्रमानिनं दक्षिणद्वारपं, श्रीः लावण्यरूपः, दिगन्तव्याप्तकीर्तिमानित्युपासीत । तत्फलोक्तिः श्रीमानित्यादि ॥ २ ॥

*( पश्चिमद्वारपालको वह्निः )*

**अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद् ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्व्यन्नादो भवति य**

**एवं वेद ॥ ३ ॥**

अथेत्यादिवाक्यत्रयस्यैवं योजना । प्रत्यङ्सुषिः पश्चिमद्वारम् । सोऽपानः तद्द्वाराधिपोऽपानवाय्वभिमानी । वाग् वागिन्द्रियमानी तदेतत् तमेतं अपानवागभिमानिनं पश्चिमद्वारपमग्निम् । ब्रह्मवर्चसं वेदलभ्य-तेजोमानी[१] अन्नाद्यमानीत्युपासीत । तत्फलोक्तिर्ब्रह्मवर्चस्वीति छान्दसः समासान्ताभावः ॥ ३ ॥

*( उत्तरद्वारपालकः इन्द्रः )*

**अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत् कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान् व्युष्टिमान् भवति य एवं वेद ॥ ४ ॥**

उदङ्सुषिः उत्तरदिगवस्थितद्वारम् । तत्समानः तदधिपः समानवायुमानी मनोऽभिमानी च । पर्जन्यः पर्जन्यनामेन्द्रः । तदेतत् तमेतम् । समानमनोमानिनं उत्तरद्वारपमिन्द्रम् । कीर्तिः पुरस्तुत्य-कीर्तिमान्, व्युष्टिरैश्वर्यवानित्युपासीत । कीर्तिमानित्यादिः फलोक्तिः ॥ ४ ॥

*( ऊर्ध्वद्वारपालकः प्रधानवायुः )*

**अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्त-देतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान् भवति य एवं वेद ॥ ५ ॥**

---

१. वेदविद्यालभ्यतेजोमानीति पाठोऽत्र स्यात् ।

ऊर्ध्वः सुषिः उपरितनं द्वारम् । स ऊर्ध्वद्वारपः उदानः उदानवायुमानी उन्नतेरुदाननामा यः स वायुर्मुख्यवायुः । आकाशः सर्वज्ञत्वादाकाश-नामा । तदेतत् तमेतमूर्ध्वद्वारपम् उदानमानिनं मुख्यवायुं ओजः ऊर्जितः महश्च पूर्णश्चेत्युपासीत, ओजस्वी ऊर्जितः महस्वान् पूर्तिमान् ॥ ५ ॥

*( द्वारपालकोपासनायाः फलम् )*

**ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद ॥ ६ ॥**

ते वा एते सूर्यचन्द्राग्नीन्द्रमुख्यवायवः । अध्यात्माधिदेवगताः पञ्च ब्रह्मपुरुषाः हृदयस्थब्रह्मणो द्वारपाः स्वर्गलोकस्य विष्णुलोकस्य च द्वारपाः । जयविजयादयो बहिर्द्वारपाः सूर्यादयोऽन्तर्द्वारपा इति ज्ञेयम् । स्वर्गद्वारपज्ञानिनः फलमाह – **स इति** ॥ स प्रसिद्धो योऽधिकारी । **अस्य** ज्ञानिनः । वीरः सुसन्ततिर्जायते । पुनर्य एतानित्युक्तिः स्वर्गलोकं प्रतिपद्यत इति विष्णुलोकप्राप्तिरूपफलोक्त्यर्था ॥ ६ ॥

**अस्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद । अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद् यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः ॥ ७ ॥**

'त्रिपादस्यामृतं दिवि'इति द्युस्थस्य 'योऽयमन्तर्हृदय आकाशः' इत्युक्तहृदयगतस्य च भेदधीनिरासाय 'इदं वाव तत्' इत्यादिना ऐक्यं वक्तुं द्युस्थतया प्रागुक्तमनुवदति– **अथेति** ॥ अर्थान्तरे[१] । यद् यद्रूपत्रयं

---

१. अथेत्यर्थान्तर इति स्यात् ।

**एवं वेद ॥ ३ ॥**

अथेत्यादिवाक्यत्रयस्यैवं योज़ना । प्रत्यङ्सुषिः पश्चिमद्वारम् । सोऽपानः तद्द्वाराधिपोऽपानवाय्वभिमानी । वाग् वागिन्द्रियमानी तदेतत् तमेतं अपानवागभिमानिनं पश्चिमद्वारपमग्निम् । ब्रह्मवर्चसं वेदलभ्यतेजोमानी[१] अन्नाद्यमानीत्युपासीत । तत्फलोक्तिर्ब्रह्मवर्चस्वीति छान्दसः समासान्ताभावः ॥ ३ ॥

*( उत्तरद्वारपालकः इन्द्रः )*

**अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत् कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान् व्युष्टिमान् भवति य एवं वेद ॥ ४ ॥**

उदङ्सुषिः उत्तरदिगवस्थितद्वारम् । तत्समानः तदधिपः समानवायुमानी मनोऽभिमानी च । पर्जन्यः पर्जन्यनामेन्द्रः । तदेतत् तमेतम् । समानमनोमानिनं उत्तरद्वारपमिन्द्रम् । कीर्तिः पुरस्तुत्यकीर्तिमान्, व्युष्टिरैश्वर्यवानित्युपासीत । कीर्तिमानित्यादिः फलोक्तिः ॥ ४ ॥

*( ऊर्ध्वद्वारपालकः प्रधानवायुः )*

**अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान् भवति य एवं वेद ॥ ५ ॥**

---

१. वेदविद्यालभ्यतेजोमानीति पाठोऽत्र स्यात् ।

ऊर्ध्वः सुषिः उपरितनं द्वारम् । स ऊर्ध्वद्वारपः उदानः उदानवायुमानी उन्नतेरुदाननामा यः स वायुर्मुख्यवायुः । आकाशः सर्वज्ञत्वादाकाश-नामा । तदेतत् तमेतमूर्ध्वद्वारपम् उदानमानिनं मुख्यवायुं ओजः ऊर्जितः महश्च पूर्णश्चेत्युपासीत, ओजस्वी ऊर्जितः महस्वान् पूर्तिमान् ॥ ५ ॥

*( द्वारपालकोपासनायाः फलम् )*

**ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद ॥ ६ ॥**

ते वा एते सूर्यचन्द्राग्नीन्द्रमुख्यवायवः । अध्यात्माधिदेवगताः पञ्च ब्रह्मपुरुषाः हृदयस्थब्रह्मणो द्वारपाः स्वर्गलोकस्य विष्णुलोकस्य च द्वारपाः । जयविजयादयो बहिर्द्वारपाः सूर्यादयोऽन्तर्द्वारपा इति ज्ञेयम् । स्वर्गद्वारपज्ञानिनः फलमाह – **स इति** ॥ स प्रसिद्धो योऽधिकारी । **अस्य** ज्ञानिनः । वीरः सुसन्ततिर्जायते । पुनर्य एतानित्युक्तिः स्वर्गलोकं प्रतिपद्यत इति विष्णुलोकप्राप्तिरूपफलोक्त्यर्था ॥ ६ ॥

**अस्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद । अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद् यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः ॥ ७ ॥**

'त्रिपादस्यामृतं दिवि' इति द्युस्थस्य 'योऽयमन्तर्हृदय आकाशः' इत्युक्तहृदयगतस्य च भेदधीनिरासाय 'इदं वाव तत्' इत्यादिना ऐक्यं वक्तुं द्युस्थतया प्रागुक्तमनुवदति– **अथेति** ॥ अर्थान्तरे[१] । यद् यद्रूपत्रयं

---

१. अथेत्यर्थान्तर इति स्यात् ।

नारायणवासुदेववैकुण्ठनामकं श्वेतद्वीपानन्तासनवैकुण्ठाख्यद्युस्थितत्वेनोक्तं तदिति शेषः । तद् रूपत्रयम् । अतो दिवः । 'पृथिव्यां द्यौः' इत्यादिप्रमाणेन द्युशब्दार्थत्वेन प्रसिद्धात् मेरुसूर्यमण्डलेन्द्रसदनाख्यलोकत्रयात् क्रमात् परः उपरितनस्थं सद् ज्योतिश्शब्दितं नारायणादिरूपत्रयं दीप्यते प्रकाशमानमास्ते । कुत्रेत्यत आह– **सर्वत इति** ॥ सर्वतः सर्वलोकेभ्यः । पृष्ठेषु उन्नतेषु । विश्वतः विश्वेभ्यः, मेरुवैजयन्तसत्यलोकाख्यब्रह्मसदनेभ्यः पृष्ठेषून्नेषु अनुत्तमेषूत्तमान्तररहितेषु उत्तमेषु श्वेतद्वीपानन्तासनवैकुण्ठेषु दीप्यत इति पूर्वेणान्वयः । एवं द्युस्थमेव रूपत्रयं कयाचिद् विवक्षया द्युपरत्वेनानूद्याधुना तद्रूपत्रयस्य हृद्गतरूपेणाभेदमाह– **इदमिति** ॥ इदं प्रागुक्तं ज्योतिश्शब्दितं रूपत्रयं तद् वाव तदेव । तत् किम् ? यदिदमस्मिन्नन्तःपुरुषे जीवहृदयान्तर्वर्तमानं ज्योतिस्तदेवेत्यर्थः । तदेव ज्योतिर्हृद्गतमित्यत्र स्पर्शनश्रवणे प्रमाणयति – **तस्येति** ॥ तस्य पुरुषान्तःप्राणाग्नौ स्थितस्य ज्योतिराख्यहरेरेषा दृष्टिः तद्विषयकमेतत् प्रत्यक्षदर्शनम् ॥ ७ ॥

**यत्रैतदस्मिंच्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद** ॥ ८ ॥ १३ ॥

किं तद् दर्शनमित्यत आह– **यत्रेति** ॥ यस्मिन्नस्मिन् शरीरे हस्तसंस्पर्शेनोष्णिमानमौष्ण्यं विजानातीत्येतदेव दृष्टिशब्दितं तस्य दर्शनमित्यर्थः । तस्येति कर्मणि षष्ठी । हृद्गतस्य ज्योतिराख्यहरिविषयिणी प्राणेन क्रियमाणा एषा श्रुतिरूपा श्रुतिः घोषः । सा केत्यत आह– **यत्रेति** ॥ **यत्र** यदा । **एतद्** एतां श्रुतिं **कर्णावपिगृह्य** हस्ताभ्यां पिधाय वर्तमान इति शेषः । **उपशृणोति** । कथमिव **निनदमिव**

समुद्रघोषमिव, **नदथुरिव** मेघघोषमिव, **प्रज्वलतोऽग्नेः** शब्दमिवेति । तदेतद् हृदयाकाशगतं ज्योतीरूपं ब्रह्म दृष्टं च श्रुतं चेत्युपासीत । कुतः ? य एवं वेद दृष्टत्वादिरूपेण वेद, उपास्ते जानाति चापरोक्षतः, स चक्षुष्यः दिव्यचक्षुष्मान् चक्षुषि ब्रह्मण्येव यातीति चक्षुष्य इत्यर्थः । श्रुतः कीर्तिमांश्च भवति मुक्तो भवतीति यावत् । अतः उपासीतेति । द्विरुक्तिर्विद्यासमाप्त्यर्था तात्पर्यज्ञप्त्यर्था वेति ॥ ८ ॥ **इति खण्डः-१३ ॥**

## ॥ अथ चतुर्दशः खण्डः ॥

*( हर्युपासना )*

**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥ १ ॥**

हृद्गतोपास्तिप्रकारपूर्वं 'इदं वाव तद्यदिदमस्मिन् पुरुषे ज्योतिः' इति हृद्गतेन बहिष्ठस्यैक्यमुक्तम् । तदयुक्तम् । हृद्गतस्याणुत्वाद् बाह्यस्य महत्त्वादणुमहतोरैक्यायोगादित्यतो हृद्गते महत्त्वस्यापि सत्त्वादैक्यमुक्तमिति भावेनाऽह– **सर्वमिति** ॥ सर्वान्तःस्थितत्वेनातिसामीप्यादिदमित्युक्तं विष्ण्वाख्यं ब्रह्म सर्वं गुणपूर्णं, खलु प्रसिद्धम् । तद् ब्रह्म जलान् जले प्रलयोदके अनिति चेष्टमानम् आस्त इति शान्तोऽधिकारी उपासीत विद्यात् । कुत एवं ज्ञेयम् ? इत्यतो ज्ञानाधीनशुभप्राप्तिमत्त्वाद् जीवस्य तज्ज्ञानमावश्यकमित्याह– **अथेति** ॥ पुरुषो जीवः । क्रतुमयः ज्ञानप्रधानः । तद् व्यनक्ति – **यथेति** ॥ यथाक्रतुर्यादृशभगवद्विषयकनिश्चयवान् अस्मिन् लोके पुरुषो भवति मृतिकाले, तथा तदनुरूपः इतो लोकाद् देहात् प्रेत्य निर्गत्य भवति यतो अथ तस्मात् क्रतुं भगवद्विषयज्ञानम् । सोऽधिकारी कुर्वीत

सम्पादयेदित्यर्थः ॥ १ ॥

**मनोमयः प्राणशरीरो भारूपः सत्यकामः सत्यसङ्कल्प आकाश आत्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥**

प्रकारान्तरेण हरेर्ज्ञानसम्पादनमाह– **मनोमय इति** ॥ मनोमयः पूर्णज्ञानः । प्राणशरीरः[१] भारूपः प्रकाशरूपः । सत्यसङ्कल्पोऽबाधितसङ्कल्पः । आ समन्तात् काशते दीप्यत इत्याकाशः । सर्वकर्मा सर्वकरणशक्तिरूपः, सर्वकामः सर्वविषयेच्छावान्, सर्वगन्धः सर्वशुभगन्धरूपः, सर्वरसः सर्वशुभरसरूपः, सर्वमिदं जगद् अभ्यात्तः प्राप्तः, अवाक्यः लौकिक इव निरर्थकवाक्यरहितः, अनादरः आत्मसम्भावनारहितः, **अवाक्यनादर** इति पाठे अवाक्यश्चासौ नादर इति विग्रहः । उक्त एवार्थः ॥ २ ॥

*( भगवान् अणोरणीयान् महतो महीयांश्च )*

**एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद् वा सर्षपाद्वा श्यामाकाद् वा श्यामाकतण्डुलाद् वा एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः ॥ ३ ॥**

महता बाह्यरूपेणैक्यघटनायाणुत्वमनुवदन् महत्त्वमाह– **एष म इत्यादिना लोकेभ्य इत्यन्तेन** । ज्यायान् वृद्धतमः पृथिव्यादितोऽप्यधिकपरिमाणवानित्यर्थः ॥ ३ ॥

---

१. 'बलशरीरः' इति वेदेशीये ।

*( भगवत्तत्त्वज्ञानिनो लभ्यफलम् )*

**सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदय एतद् ब्रह्मैतमितः प्रेत्याभिसम्भविताऽस्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माऽह शाण्डिल्यः शाण्डिल्यः** ॥ ४ ॥ १४ ॥

पूर्वं सर्वगन्ध इति चिदानन्दाद्यात्मकसर्वगन्धादिमत्त्वमुक्तम् । पुनरत्र सर्वकर्मेत्याद्युक्तिस्तद्भोक्तृत्वमप्यस्तीति वक्तुमिति । 'सर्वमभ्यात्तः' इत्युक्तिरादरार्था । मे अन्तर्हृदये स्थित आत्मा एष उक्तज्यायस्त्वादिकः, एतद् ब्रह्म बहिर्व्याप्तभगवद्रूपमित्यर्थः । उक्तरूपेण भगवज्ज्ञानमापादितवतो भगवत्प्राप्तिरूपफलमाह – **एतमिति** ॥ इतः प्रेत्य एतं भगवन्तमभिसम्भविताऽस्मि प्राप्ताऽस्मीत्यद्धा निश्चयो यस्य स्यात् तत्र विचिकित्सा संशयो यस्य नास्ति; स याति पुरुषोत्तममिति शेषः । इति ह स्माऽह शाण्डिल्यः । द्विरुक्तिरुक्तार्था । एतेन म इति शाण्डिल्यस्य वचनमिति ज्ञायते ॥ ४ ॥ **इति चतुर्दशः खण्डः ॥**

**॥ अथ पञ्चदशः खण्डः ॥**

*( विश्वाश्रयस्य हरेः शरीरम् )*

**अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलं स एष कोशो वसुधानस्तस्मिन् विश्वमिदꣳ श्रितम्** ॥ १ ॥

'एतेभ्यो[१] लोकेभ्यो ज्यायान्' इति भगवान् महानित्युक्तं,

१. 'एभ्यः' इति स्यात् ।

तर्ह्याकाशवदशरीर इति धीनिरासाय विग्रहेण महानित्याह– **अन्तरिक्षोदर इति** ॥ कोशः, कं सुखम्, उश इच्छा, आनन्देच्छा-रूपत्वात् कोश इत्युक्तो भगवानन्तरिक्षोदरः बहुव्रीहिः । भूमिबुध्नः भूमिः पृथिवी पादबुध्नयोः पादोपरिभागयोः यस्य स भूमिबुध्नः । न जीर्यति नित्यमजरः । अस्य कोशस्य स्रक्तयो बाहवो दिशो धर्मज्ञानादिदेशनाद् दिङ्नामानो दिगाश्रया इत्यर्थः । अस्य कोशस्य द्यौरुत्तरं बिलं शिरो विवरम् । वसवो देवा धीयन्तेऽत्रेति वसुधानः । स एष कोशो हरिर्देवानां निधानम् । तस्मिन् हरौ सर्वमिदं जगत् श्रितम् ॥ १ ॥

*( दिशामाश्रयस्य भगवतो बाहवः )*

**तस्य प्राची दिग् जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोद॰ रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोद॰ रुदम्** ॥ २ ॥

स्रक्तयो दिश इत्युक्तम् । तत्र को भुजः किंदिक्प्रवर्तकः किन्नामकश्चेत्यत आह – **तस्येति** ॥ तस्य कोशाख्यस्य हरेः प्राची दिक् पूर्वदिगाश्रयः प्राचीनामा प्राग्दिक्स्थितः दक्षिणोर्ध्वबाहुः जुहोति, हु दानादनयोः[१]। अनेन भुङ्क्ते इति वा चक्रेण शत्रून् जुहोति संहरतीति वा चक्रधरो जुहूरित्युच्यते । नाम प्रसिद्धम् । दक्षिणा दक्षिणदिक्स्थिता दक्षिणाधरस्रक्तिः सहमाना । मानं वेदरूपं प्रमाणं तदात्मकशङ्खो मानशब्दार्थः । मानेन शङ्खेन सहिता सहमानेत्युच्यते । प्रतीची प्रतीच्यां स्थिता वामोर्ध्वस्रक्तिः राज्ञी[२], राजीयुक्तगदायुक्तत्वाद्राज्ञीत्युक्ता ।

१. 'आदाने च' इत्येके । 'प्रीणनेऽपि' इति पातञ्जलभाष्यम् । २. 'राजी-रेखायुक्तगदायुक्तत्वात्' इति पाठान्तरम् ।

नाम प्रसिद्धम् । उदीची उत्तरादिगवस्थिता वामाधरस्रक्तिः सुभूता [१]भूतशब्दितलक्ष्म्याश्रितपद्मोपेतत्वात् सुभूतेत्युच्यते ।

नाम प्रसिद्धम् । तासां दिङ्नामिकानां दिगाश्रयस्रक्तीनां वायुः मुख्यप्राणो वत्सः पुत्रः । तज्ज्ञानिनः फलमाह– **स य इति** ॥ योऽधिकारी एतमेवं मुख्यवायुं दिशां वत्सं वेद, स न पुत्ररोदं रोदिति पुत्रो भूत्वा रोदनं न करोति, मुक्तो भवतीत्यर्थः । एवं ज्ञात्वा तादृशफलभाक् कश्चिदस्ति किम् ? इत्यतोऽस्तीत्याह – **सोऽहमिति** ॥ सोऽहमेतमेवं वायुं दिशां वत्सं वेद जानामि । अतः पुत्ररोदं मा रुदं पुत्रो भूत्वा रोदनं नाकरवम् । अनादिकालतो मुक्त एवाभूवम् ॥ २ ॥

*( हरेर्बाहूपासनया रमया लब्धफलनिरूपणम् )*

**अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥**

अरिष्टम् अविनष्टं कोशं आनन्देच्छारूपं हरिं प्रपद्ये प्राप्तवान- भूवम् । किं स्वसामर्थ्येन ? नेत्याह – **अमुना** भगवता तत्प्रसादेनेति यावत् । त्रिरुक्तिः केवलं तत्प्रसादेनैव, न तु मत्प्रयत्नेनेति सूचयितुम् । एवमग्रेऽ- पि । प्राणं सर्वप्रणेतारं वासुदेवम् ॥ ३ ॥

**अथ यदवोचं प्राणं प्रपद्य इति प्राणो वा इदꣳ सर्वं भूतं यदिदं किञ्च तमेव तत् प्राप्स्यथ ॥ ४ ॥**

'प्राणं प्रपद्ये' इत्यादिवाक्यचतुष्टयं स्वयमेव विवृणोति– **स इति** ॥

१. 'भूतिशब्दित' इति पाठान्तरम् ।

सोऽहमित्यनुषङ्गः । प्राणं प्रपद्य इति यदवोचं यदिदं किञ्च भूतं प्रभूतं मत्स्याद्यवतारजातम् इदं सर्वं प्राणो वै प्राणशब्दितवासुदेवो वै । तत् तस्मात् तमेव मत्स्याद्यवतारात्मकं प्राणमेव प्राप्स्यथ । हे जना इत्युवाच लक्ष्मीरिति शेषः । साऽहमिति वक्तव्ये सोऽहमिति पुल्लिङ्गोक्तिः पुंशक्तियुक्तत्वादिति ज्ञेयम् ॥ ४ ॥

**अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरीक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥ ५ ॥**

अथेति वाक्यान्तरव्याख्यानारम्भे । एवमग्रेऽपि । ज्ञानेन भूषयतीति व्युत्पत्त्या भूर्नामकं सङ्कर्षणं प्रपद्य इति यदवोचं तत् पृथिवीं स्वात्मप्रथनहेतुना पृथिवीनामकं पृथिवीस्थितम् अन्तरीक्ष्यत इत्यन्तरिक्ष-नामकम् अन्तरिक्षगतं क्रीडाकरत्वेन द्युनामकं प्रपद्य इत्येवावोचत् ॥ ५ ॥

**अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥ ६ ॥**

भावयत्युत्पादयति जगदिति भुवर्नामकं प्रद्युम्नं प्रपद्य इति यदवोचं तद् वह्नौ हुतमत्तीत्यग्निनामानमग्निगतं, वात्यायुश्चेति वायुनामकं वायुगतम्, आददात्यायुरित्यादित्यनामकम् आदित्यस्थं प्रपद्य इत्येवावोचमित्यर्थः ॥ ६ ॥

**अथ यदवोचं स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम् ॥ ७ ॥ १५ ॥**

परानन्दस्वरूपत्वहेतुना स्वर्नामकमनिरुद्धं प्रपद्य इति यदवोचं तद् ऋचं ज्ञानं वेदयत इति ऋग्वेदनामकम् ऋग्वेदगतं, यज्ञं वेदयत इति यजुर्वेदाख्यं यजुर्वेदगतं, साम्यं वेदयत इति सामवेदाख्यं सामवेदगतं प्रपद्य इत्येवावोचमित्युवाच लक्ष्मीरिति ॥ ७ ॥ इति पञ्चदशः खण्डः ॥

## ॥ अथ षोडशः खण्डः ॥

*( जीवनं यज्ञात्मकम् – तत्र प्रातःसवनम् )*

**पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत् प्रातःसवनं चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदꣳ सर्वं वासयन्ति ॥ १ ॥**

अनेका उपास्तय उक्ता वक्ष्यन्ते च । तासामनुष्ठानमायुषः क्षणिकत्वात्, स्थायि चेदपि तस्य रोगोपहतत्वादशक्यमित्यतः आयुर्वृद्ध्यर्थं रोगपरिहारार्थं च पुरुषयज्ञरूपामुपास्तिमाह – **पुरुषो वाव यज्ञ इत्यादिना ॥** पुरुषो जीवः यज्ञः भगवत्पूजार्थयज्ञः । विष्णुपूजार्थयज्ञोऽहमित्युपासीत पुरुष इत्यर्थः । पुरुषस्य यज्ञत्वे कानि सवनानीत्यत आह– **तस्य यानीत्यादिना** ॥ पुरुषस्याऽयुर्बार्हस्पत्यादिमानभेदेन वा द्वापरादियुगभेदेन वा षोडशोत्तरशतसङ्ख्याकं भवति । तत्र यानि तस्य पुरुषयज्ञस्य पूर्वचतुर्विंशतिवर्षाणि तत् तानि प्रातस्सवनम् । कथं पूर्ववयसः प्रातस्सवनतेत्यतः सवने जप्यऋगक्षरसाम्यादित्याह– **चतुर्विंशत्यक्षरेति** ॥ ततः किमित्यत आह– **गायत्रमिति** ॥ प्रातस्सवनं गायत्रीच्छन्दस्कमन्त्रोपेतम् । तद्देवता आह– **तदस्येति** ॥ तस्यास्य चतुर्विंशतिवर्षरूपप्रातस्सवनस्य वसवोऽन्वायत्ताः अधिष्ठातारः, देवता इति यावत् । तथा च तैत्तिरीयश्रुतिः – **'वसुमद्गणस्य सोमदेवतेति मतिविदः प्रातःसवनस्य गायत्रच्छन्दसः'** इत्यादि । के वसव इत्यत आह– **प्राणा वाव वसव इति** ॥ कथं वसुत्वमित्यत आह– **एते हीति** ॥ प्राणा हीदं प्राणिजातं [१]तस्मिन् वयसि प्रातस्सवनाख्ये वासयन्तीति वासनहेतुतया पुरुषयज्ञे प्राणा वसव इत्यर्थः ॥ १ ॥

१. 'एतस्मिन्' इति पाठान्तरम् ।

**तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा वसव इदं मे प्रातःसवनं माध्यन्दिनꣳ सवनमनुसन्तनुतेति माऽहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ २ ॥**

तं चेद् विष्णुपूजार्थयज्ञरूपं पुरुषं एतस्मिन् प्रातस्सवनरूप-चतुर्विंशतिवर्षमध्ये वयसि किञ्चिज्ज्वरादिकं उपतपेद् बाधेत तदा स पुरुषो ब्रूयात् प्रार्थयीत। हे प्राणा वसव इदं मे प्रातस्सवनं प्रातस्सवनरूपं प्रथमं वयः माध्यन्दिनं सवनम् अनुसन्तनुत तावत्पर्यन्तं नयत। अहं प्राणानां वसूनां मध्ये यज्ञो भगवद्यज्ञरूपोऽहं मा विलोप्सीय लुप्तो मा भूवमिति ब्रूयादित्यन्वयः। एवं प्रार्थने किं भवतीत्यत आह– **उद्धैवेति** ॥ ततो ज्वरादितः एति उद्गतो भवति, उद्धैव सत्यमेव। तद् व्यनक्ति– अगदः अरोगो भवति ॥ २ ॥

*( माध्यन्दिनसवनम् )*

**अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनꣳ सवनं चतुश्चत्वारिंशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदꣳ सर्वꣳ रोदयन्ति ॥ ३ ॥**

**तं चेदेतस्मिन् वयसि किञ्चदुपतपेत् स ब्रूयात् प्राणा रुद्रा इदं मे माध्यन्दिनꣳ सवनं तृतीयं सवनमनुसन्तनुतेति माऽहं प्राणानां रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ ४ ॥**

अथानन्तरं यानि चतुश्चत्वारिंशद्वर्षाणि तस्येत्यनुषङ्गः। पूर्ववद् योजना। त्रैष्टुभं त्रिष्टुप्छन्दस्कऋग्युक्तम् ॥ ३ ॥ ४ ॥

*( सायंसवनम् )*

**अथ यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयं सवनमष्टाचत्वारिंशदक्षरा जगती जागतं तृतीयं सवनं तदस्याऽदित्या अन्वायत्ताः प्राणा वाव आदित्या एते हीदꣳ सर्वमाददते ॥ ५ ॥**

अथ यान्यष्टाचत्वारिंशदित्याद्यपि पूर्ववद् ध्येयम् । इदं सर्वं शब्दादिविषयजातम् आददते गृह्णन्ति ॥ ५ ॥

**तं चेदेतस्मिन् वयसि किञ्चदुपतपेत् स ब्रूयात् प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥ ६ ॥**

आयुरनुसन्तनुत यावदायुस्तावन्नयत ॥ ६ ॥

*( पुरुषयज्ञोपासनायाः फलम् )*

**एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत् प्राह षोडशं वर्षशतं जीवति य एवं वेद ॥ ७ ॥ १६ ॥**

यज्ञत्वेनाऽयुरुपास्त्या निर्विघ्नमायुः प्राप्तवानस्ति किमित्यतोऽस्तीत्याह– **एतद्ध स्मेति** ॥ महिदासनामक इतरातनयः कश्चिद् ऋषिः एतत्पुरुषयज्ञप्रकारं वस्वादिप्रार्थनया तत्तद्वयसि प्राप्तरोगनिवर्तनं च विद्वान् जानन् एतद्वक्ष्यमाणमाह– हे गद ! स त्वं मे मम एतत् शरीरं किं किमर्थम् उपतपसि क्लेशयसि ? योऽहमनेन तापेन न प्रेष्यामि मृतो न भविष्यामीत्याहेत्यन्वयः । स ऋषिः षोडशशतवर्षमजीवत् । एतज्ज्ञानिनः फलमाह– स हेति ॥ योऽधिकारी एवमुक्तरीत्या पुरुषयज्ञादि वेद सः

षोडशोत्तरवर्षशतं जीवति ॥ ७ ॥ **इति षोडशः खण्डः ॥**

## ॥ अथ सप्तदशः खण्डः ॥

*( पुरुषयज्ञस्य दीक्षोपसदादीनां विचारः )*

**स यदशिशिषति यत् पिपासति यन्न रमते ता अस्य दीक्षाः ॥ १ ॥**

प्रसिद्धयज्ञे दीक्षा उपसदः स्तुतशस्त्राणि दक्षिणा चास्ति, तान्यपि पुरुषयज्ञे सन्तीत्याह – **स यदिति** ॥ सः भगवत्पूजार्थयज्ञरूपः पुमान् अशिशिषति भोक्तुमिच्छति[१] पिपासति पातुमिच्छतीति यत्, न रमत इति यत्, ताः विधेयापेक्षया स्त्रीत्वं, अस्य दीक्षाः ॥ १ ॥

**अथ यदश्नाति यत् पिबति यद् रमते तदुपसदैरेति ॥ २ ॥**

तदुपसदैः तैरशनपानरमणरूपैरुपसदैरुपसदाख्ययजमानव्यापारैरेति ॥ २ ॥

**अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥ ३ ॥**

अथ हसतीति यत्, जक्षति खादतीति यत्, मैथुनं चरतीति यत्, यदन्यत् कृत्यं तत् करोतीति यत्, तत् तैः तदात्मकैरेव स्तुतशस्त्रैः स्तोत्रशस्त्रैरेति वर्तते । स्तोत्रम् ऋगक्षरोपेतसामगानम् । शस्त्रं केवलं मन्त्रपठनम् ॥ ३ ॥

**अथ यत् तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः ॥ ४ ॥**

अथ तपः कृच्छ्रचान्द्रायणादि परापरतत्त्वचिन्तनं वा । आर्जवं

१. अत्र "इति यत्" इत्यस्य मुद्रिते लिखिते च पुस्तकेऽदर्शनं प्रामादिकमिति भाति ।

मनोवाक्कर्मस्वैकरूप्यं इति यत् ता अस्य पुरुषयज्ञस्य दक्षिणाः ॥ ४ ॥

**तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथः** ॥ ५ ॥

यत् सत्रं सत्राख्यं कर्म यत् एतद् आत्मदक्षिणं वै बहुव्रीहिः । तस्मादायुषो यज्ञसादृश्यात् प्रसिद्धयज्ञे सोष्यति सवनं करिष्यति असोष्ट सवनमकरोदिति यदाहुस्तद् अस्य यजमानस्य पितृत उत्पादनं प्रथमं मातुः सकाशात् पुनरुत्पादनमेवाऽहुः । अस्य पुरुषयज्ञस्य मरणमेवावभृथः ॥ ५ ॥

*( भगवदुपासनया अपरोक्षज्ञानम्, भगवत्प्राप्तिश्च )*

**तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसꣳशितमसीति । तत्रैते द्वे ऋचौ भवतः** ॥ ६ ॥

तद्धैतत् तदेतदायुर्यज्ञप्रकारं घोरनामा आङ्गिरसो अङ्गिरःपुत्रः । देवक्याख्यस्त्रीपुत्राय कृष्णनाम्ने कस्मैचिद् विष्ण्ववतारभिन्नाय मुनये उक्त्वा वक्ष्यमाणविष्णूपासनप्रकारं चोवाच ऋषिः । अपिपासः, उपलक्षणमेतत् । अशिशिषतीत्यादिनोक्तदीक्षादिमान् बभूवेत्यर्थः। स एवमायुर्यज्ञतयाऽत्मानं ध्यायन् पुरुषोऽन्तवेलायां प्राणात्ययसमये एतत् त्रयं वक्ष्यमाणं प्रतिपद्येत जपेत । तन्मन्त्रत्रयमाह– **अक्षितमसीति** ॥ भगवन् त्वमक्षितमसि अक्षयोऽसि । अच्युतमसि गुणैरच्युतोऽसि । प्राणात् शंसितम् अधिकसुखोपेतोऽसि, इति प्रतिपद्येतेत्यर्थः । उक्तप्रकारेण भगवदुपास्त्या तस्य किं भवतीत्यतस्तदपरोक्षज्ञानं, तेन तत्प्राप्तिश्च भवतीत्यभिप्रेत्याभिप्रेतार्थे द्वे ऋचौ प्रमाणत्वेनाऽह– तत्रेति ॥

भगवदुपास्त्या तदपरोक्षज्ञानं, तेन च तत्प्राप्तिरित्यर्थद्वये क्रमादृचौ प्रमाणत्वेन भवत इत्यर्थः ॥ ६ ॥

**आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम् । परो यदिध्यते दिवा । उद् वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ इत्यगन्म ज्योतिरुत्तममिति ॥ ७ ॥ १७ ॥**

तावाह– **आदिदिति** ॥ **'आदित् प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा'** आदित् अस्मादेव भगवत्प्रसादादेव, प्रत्नस्य पुरातनस्यानादेः, रेतसो रतिरूपस्य हरेर्ज्योतिः वासरं, वासेन रमयतीति हेतुना वासरशब्दितं पश्यन्ति । यज्ज्योतिर्दिवा दिवः परः परतो वैकुण्ठे इध्यते ऋद्धतममेव सद्दीप्यमानमास्ते इति प्रथममन्त्रार्थः । **उद्वयमिति** द्वितीयमन्त्रस्य तु उत्तरमुत्तमं ज्योतिः पश्यन्तः तदेवोत्तरं ज्योतिः स्वः आनन्दरूपं च परिपश्यन्तः वयम् । पश्यन्त उत्तरमिति द्विरुक्तिस्तात्पर्यार्था । तमसः उदगन्म उद्गताः स्मः । यद्वा, उदिति भगवन्नाम । उद् उदाख्यम् उत्तमं देवत्रादेवं देवानां देवं सूरिप्राप्यत्वेन सूर्यशब्दितं ज्योतिरगन्म प्राप्ताः स्मेत्यर्थः । उत्तरमुत्तममुत्तममिति (१)पदत्रयस्योत्तमोत्तमोत्तममित्यर्थः ॥ ७ ॥

**॥ इति सप्तदशः खण्डः ॥**

---

१. मन्त्रे उत्तरमुत्तरमुत्तममिति पदत्रयं दृश्यते । वेदेशीयेऽप्येवमेव गृहीतम् । तस्मादत्र तथैव स्यात् । उत्तरमुत्तममुत्तममिति पदत्रयग्रहणं चिन्त्यम् ।

## ॥ अथ अष्टादशःखण्डः ॥

*( अध्यात्माधिदैवतयोः भगवदुपासना )*

**मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥ १ ॥**

लब्धायुषः पुरुषस्याऽयुषः सार्थक्यायाध्यात्ममधिदैवतं च भगवदुपास्तिं तत्फलं चाऽह – **मनो ब्रह्मेति** ॥ मनुत इति मनोनाम मनःस्थो नारायणः ब्रह्मेत्युपासीतेत्यध्यात्ममुपास्तिरुक्तेत्यर्थः । अथेत्यर्थान्तरे । अधिदैवतमुपास्तिरुच्यत इत्यर्थः । आ समन्तात् काशत इत्याकाशनामाऽऽकाशगतो नारायणः ब्रह्मेत्युपासीतेत्यनुषङ्गः । उपसंहरति– अध्यात्ममधिदैवतं चोभयमुपासनमादिष्टमुपदिष्टं भवतीति ॥ १ ॥

*( अध्यात्माधिदैवतयोः हरेः रूपचतुष्टयम् )*

**तदेतच्चतुष्पाद् ब्रह्म वाक्पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवाऽदिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥ २ ॥**

तदेतद् ब्रह्म चतुष्पात् । नारायणाख्यम् अध्यात्माधिदैवगतं ब्रह्म वासुदेवादिरूपचतुष्टयोपेतमित्यर्थः । तद् विवृणोति– **वागिति** ॥ वक्तीति वाङ्नामा वागिन्द्रियस्थो वासुदेवः एकः पादः । प्राणः प्राणनहेतुतया प्राणनामा घ्राणेन्द्रियस्थः सङ्कर्षणः पादः । चष्ट इति चक्षुर्नामा चक्षुस्थः प्रद्युम्नः पादः । शृणोतीति श्रोत्रनामा श्रोत्रस्थोऽनिरुद्धः पादः, इत्यध्यात्मं पादचतुष्टयमुक्तमित्यर्थः । अथाधिदैवतं तदुच्यत इत्यर्थः । अत्तीत्यग्निनामाऽग्निस्थो वासुदेवः एकः पादः, वायुनामा वायुस्थः सङ्कर्षण पादः,

आदित्यनामाऽऽदित्यस्थः प्रद्युम्नः पादः, दिङ्नामा दिक्षु स्थितोऽनिरुद्धः पादः । रूपबाहुल्याद् बहुवचनम् । उपसंहरति – **इत्युभयमिति** ॥ अध्यात्ममधिदैवतं चेत्युभयमेवाऽदिष्टमुपदिष्टं भवति ॥ २ ॥

*( वागिन्द्रिये वासुदेवः )*

**वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥**

अध्यात्माधिदैवगतरूपाणां भेदशङ्कायां नेत्याह – **वागेवेति** ॥ वाङ्नामा वाचि स्थितो ब्रह्मणश्चतुर्थः पादो वासुदेव एव अग्निनाऽग्निनाम्नाऽग्निस्थेन ज्योतिषा स्वात्मरूपेण भाति च । दुष्टान् तपति च । फलमाह– **भाति चेति** ॥ योऽधिकारी एवमध्यात्माधिदैवगतमनआकाशगतस्य तन्नाम्नो नारायणस्य वाचि स्थितो वाङ्नामा वासुदेवाख्य इतरपादत्रयापेक्षया चतुर्थपादत्वेनोक्तः अग्निस्थात्मरूपज्योतिषा भाति दुष्टान् तपतीत्येवं प्रकारेण वेद स ज्ञानी ब्रह्म प्राप्य मुक्तौ कीर्त्या यशसा ज्ञानसुखात्मना ब्रह्मवर्चसेन वेदाभ्यासजन्यतेजोविशेषेण भाति च, अज्ञानादि तपति चेत्यर्थः ॥ ३ ॥

*( घ्राणेन्द्रिये सङ्कर्षणः)*

**प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥**

प्राण एव प्राणनामा घ्राणेन्द्रियस्थः सङ्कर्षणो वायुना वायुगतेन

वायुनाम्ना सङ्कर्षणाख्य स्वात्मरूपज्योतिषा, भातीत्यादि प्राग्वत् । एवं नारायणाख्यब्रह्मणः सङ्कर्षणाख्यप्राणगतश्चतुर्थः पादः वायुगतज्योतिषा भाति, तपति चेत्येवं वेदेत्यर्थः ॥ ४ ॥

*(चक्षुरिन्द्रिये प्रद्युम्नः)*

**चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥** चक्षुरेव चक्षुर्गतश्चक्षुर्नामा प्रद्युम्नः आदित्येन ज्योतिषा आदित्यस्थप्रद्युम्नाख्यस्वात्मज्योतिषा । शिष्टं प्राग्वत् ॥ ५ ॥

*(श्रोत्रेऽनिरुद्धः)*

**श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ॥ ६ ॥ १८ ॥**

श्रोत्रमेव श्रोत्रस्थः श्रोत्रनामाऽनिरुद्धः ॥ ६ ॥ १८ ॥

## ॥ अथ एकोनविंशः खण्डः ॥

*(आदित्ये भगवदुपासना)*

**आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् तत् सदासीत् तत् समभवत् तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ॥ १ ॥**

यत्प्राप्त्या कीर्त्यादिफलभाग् भवति तत्प्राप्तिसम्पादिकामादित्यनिष्ठां काञ्चन विद्यामाह – **आदित्यो ब्रह्मेति ॥** आदित्यस्थः आदित्यनामा

हरिर्ब्रह्मेत्युपासीतेति शेषः । इत्यादेश उपदेशः । कथमादित्यस्य जीवस्य ब्रह्मत्वेनोपास्तिरित्यतः तद्घटनाय प्रलयप्रकारं वदन्नादित्यस्योत्पत्ति-प्रकारोक्त्या तत्र हरेः प्रादुर्भावमाह – **तस्येति** ॥ तस्य आदित्ये ब्रह्मत्वोपासनस्योपपत्त्यर्थं व्याख्यानं सृष्टिनिरूपणं क्रियत इत्यर्थः । इदमग्रे अस्य प्रपञ्चस्याग्रे पूर्वं प्रलय इति यावत् । केनाप्यगम्यत्वहेतुना असन्नामकं नारायणाख्यं ब्रह्माऽसीत्, तत् ततः असन्नाम्नो नारायणात् । ज्ञानिगम्यतया सन्नामकं वासुदेवाख्यं रूपम् आसीत् प्रादुरभूत् । तत् नारायणाख्यं चित्प्रकृत्या समभवत् सम्भोगमकरोत् । तत् ततः आण्डं निरवर्तत अजायत तद् आण्डं संवत्सरस्य मात्रां संवत्सरपर्यन्तं अशयत अशेत । पश्चात्तदण्डं निरभिद्यत ऊर्ध्वाधोभेदेन भिन्नमभवत् । ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ॥ १ ॥

**तद्यद्रजतं सेयं पृथिवी यत्सुवर्णं सा द्यौर्यज्जरायु ते पर्वता यदुल्बं स मेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदकꣳ स समुद्रः ॥ २॥**

तद् यद् रजतं सेयं पृथिवी । रजताण्डकपाले पृथिव्यादिसप्त-लोकास्तिष्ठन्तीत्यर्थः । यत् सुवर्णं सा द्यौः । सुवर्णकपाले द्यौरुपरितन-लोकास्तिष्ठन्तीत्यर्थः । यज्जरायु स्थूलं गर्भपरिवेष्टनं ते पर्वताः । उल्वं सूक्ष्मं गर्भपरिवेष्टनं स मेघो नीहारश्च । या धमनयो नाड्यः ता नद्यः । यद् वास्तेयमुदकं वस्तिसम्बन्धि नाभेरधो विद्यमानं स समुद्रः ॥ २ ॥

**अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽ-नूदतिष्ठन् सर्वाणि च भूतानि च सर्वे च कामास्तस्मात् तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे च कामाः ॥ ३ ॥**

अथानन्तरं यद् वस्तु तत् तत्राऽण्डे अजायत सोऽसावादित्यः आदित्यजीवनियन्ता आदित्यमण्डलस्थः आदित्यनामा भगवान् । अथ तस्मादादित्यो ब्रह्मेत्युपासीतेति अथशब्दो हेत्वर्थे वा । तं जायमानम् आदित्यमण्डलगतं हरिमुलूलवः उरूरवः रलयोरभेदात्, अतिमहान्तो गायत्र्यादिवेदघोषाः अनूदतिष्ठन् । तथा सर्वाणि च भूतानि ब्रह्मादीनि, सर्वे च कामाः, सर्वमङ्गलद्रव्याणि चानूदतिष्ठन्नित्यन्वयः । ब्रह्मादयः सर्वे देवाः मङ्गलद्रव्यैर्गन्धाक्षतपुष्पादिभिर्गायत्र्यादिवेदघोषैः उपातिष्ठन्त अस्तुवन्नित्यर्थः । तस्माद् ब्रह्मादिभिरेवं कृतत्वादद्यतनान्यपि भूतानि प्राणिजातानि तस्याऽदित्यनाम्नो हरेरुदयं प्रति प्रत्यायनम् अस्तं च प्रति उलूलवो गायत्र्यादिघोषाः गन्धाक्षतादिमङ्गलद्रव्यरूपकामाश्चानूत्तिष्ठन्ति ॥ ३ ॥

**स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन् निम्रेडेरन् ॥ ४ ॥ १९ ॥**

**॥ इति श्रीमच्छान्दोग्योपनिषदि तृतीयोऽध्यायः ॥ ३ ॥**

ज्ञानिनः फलमाह– **स य इति** ॥ स प्रसिद्धो योऽधिकारी एतद् आदित्यस्य ब्रह्मत्वम् एवम् 'असदेवेदमग्रे' इत्याद्युक्तप्रकारेण विद्वानादित्यं ब्रह्मेत्युपास्ते एनमुपासकं साधवो घोषाः समीचीन-वेदघोषाः यद् एते आ च गच्छेयुः उप समीपे निम्रेडेरंश्च मुक्तौ वेदानां नित्यावासभूतो भवतीत्यर्थः ॥ ४ ॥ १९ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

**अथ श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते चतुर्थाध्याये प्रथमः खण्डः**

*( जानश्रुतेरुपाख्यानम् )*

**॥हरिः॥ॐ॥ जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुवाक्य आस । स ह सर्वत आवसथान् मापयाञ्चक्रे सर्वत एव मेऽत्स्यन्तीति ॥ १ ॥**

'मनो ब्रह्म' इत्यादिखण्डे 'भाति च तपति च' इत्यादिना भानादिफलकविद्योक्ता । अत्र तु सार्वज्ञादिसम्पादकसंवर्गविद्यामाख्यायिकया त्रिभिः पर्वभिराह – **जानश्रुतिरिति** ॥ जनश्रुतस्यापत्यं **जानश्रुतिः** पुत्रायणस्य गोत्रापत्यं **पौत्रायणः**, श्रद्धया देयमस्य **श्रद्धादेयः**, **बहुदायी** यथेष्टदाता, **बहुवाक्यः**[1] बहुमानवाक्यवान्, बहुश्रुतो वा **आस** बभूव । **स** राजा **सर्वतः** सर्वत्र **आवसथान्** गृहान् **मापयाञ्चक्रे** कारयामास । **कुतः ? सर्वत** आगत्य **मे** मदीयमन्न**मत्स्यन्ति** । अद्युरिति बुद्ध्याऽन्नसत्रगृहान् कारयामास सर्वत्रेत्यर्थः ॥ १ ॥

**अथ ह हꣳसा निशायामतिपेतुस्तद्धैवꣳ हꣳसो हꣳसमभ्युवाद होहोयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत् त्वा मा प्रधाक्षीरिति ॥ २ ॥**

**अथ** एवं राज्ञि स्थिते सत्यनन्तरं कदाचिन्**निशायां** रात्रौ **हंसाः** पक्षिणः प्रासादे मञ्चे शयानं राजानम् **अभिपेतुः** गगनमार्गे परिपतितवन्तः । **तद्ध** तदैव **हंसः** कश्चिदन्यहंसं पुरतः उत्पतन्त**मभ्युवाद** । हो

१. 'बहुपाक्यः ' इति मूले पाठान्तरम् ।

**होयि** भो भो हंस **भल्लाक्ष भल्लाक्ष** मन्दाक्ष **जानश्रुतेः पौत्रायणस्य समं दिवा** द्युलोकपर्यन्तं **ज्योतिराततं** व्याप्तमस्ति । तद् ज्योतिः त्वं **मा प्रसाङ्क्षीः** तत्प्रसञ्जनं सम्बन्धं मा कार्षीः । कुतः ? **तत्** तेजः **त्वा** त्वां **मा प्रधाक्षीः** दग्धं न करोतु, अत इति योजना । मध्यमपुरुषश्छान्दसः ॥ २ ॥

**तमु ह परः प्रत्युवाच कम्वर एनमेतत् सन्तꣳ सयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ॥ ३ ॥**

इत्येकेन हंसेनोक्तः **परो** हंसः **तमेवं** ब्रुवाणं हंसं **प्रत्युवाच** । किमिति? अरे हंस **एतत्सन्तम्** एतस्मिन् प्रासादे सन्तम् **एनं** पौत्रायणं **कं** कीदृक्प्रभावं मत्वा **सयुग्वानं** शकटयुगाश्रितं नामतो **रैक्वमिवाऽत्थ** वदसीति प्रत्युवाचेत्यर्थः । इति प्रत्युक्तोऽन्यो हंस आह । त्वयोक्तः **सयुग्वा रैक्वः यो नु** को नु **कथं** कीदृक्प्रभाववानिति ॥ ३ ॥

**यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद् वेद यत् स वेद स मयैतदुक्त इति ॥ ४ ॥**

उत्तरमाह हंसः – **स यथेति** ॥ वक्ष्यमाणदृष्टान्तो यथेत्यर्थः । **कृताय विजिताय** सम्यक्कर्मकरणेन कृतयुगे जिते सति **अधरेयाः** त्रेतादयः संयन्ति जितफला भवन्ति । एवं यत्किञ्चेमाः प्रजाः साधु पुण्यं कर्म कुर्वन्ति स्वयोग्यं तत्सर्वमेनं संवर्गविद्यावेदिनं रैक्वम् अभिसमेति प्राप्नोति । यः कोऽपि । यद् ज्ञातव्यं वेद तत्सर्वं स रैक्वो वेद । स रैक्वो मया एतदुक्तोऽनेन प्रकारेणोक्त इत्युवाच हंस इत्यर्थः ॥ ४ ॥

( रैक्वमुनेरन्वेषणम् )

**तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह सञ्जिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ॥ ५ ॥**

**यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत् स वेद स मयैतदुक्त इति ॥ ६ ॥**

तदुह हंसोक्तमात्मानादररूपं रैक्वप्रशंसारूपं च वाक्यं जानश्रुतिः पौत्रायणः उपशुश्राव । स ह राजा सञ्जिहानः तल्पादुत्थितः सन्नेव क्षत्तारं सारथिम् उवाच । किमित्यतस्तदाह – **अङ्गेति** ॥ अरे अङ्ग ! भो प्रिय! क्षत्तः रैक्वो नाम मुनिस्त्वया विचार्यः । कुतः ? इति चेत् पृच्छसि रात्रौ प्रासादे शयनकाले केचन हंसा अतिपेतुः । तदैकं हंसं प्रति अरे मन्ददृष्टे हंस जानश्रुतेर्ज्योतिर्द्युलोकपर्यन्तं व्याप्तमस्ति तत्स्पर्शनं न कुरु तथात्वे त्वां धक्ष्यतीत्यन्येनोक्तो हंसोऽभ्युवाद । 'कम्वर एनमेतत्सन्तम्' इत्येतावद्वाक्यं 'सयुग्वानम्'इत्यतः प्राग् योज्यम् । मयैतदुक्त इति वाक्यानन्तरमेवं हंसोक्तमतस्त्वया स ज्ञातव्य इति क्षत्तारमुवाचेत्यर्थो ज्ञेयः । वाक्यस्यार्थः प्रागुक्त एव ॥ ५ ॥ ६ ॥

**स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय तꣳ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमृच्छेति ॥ ७ ॥**

एवमुक्तः क्षत्ता सर्वत्रान्विष्य नाविदं न लब्धवानस्मीति वदन् प्रत्येयाय प्रत्यागतवान् । तं क्षत्तारं राजा पुनरुवाच । अरे क्षत्तः! यत्र ब्राह्मणस्यान्वेषणा अनुमार्गणं भवति तत् तत्र एनं रैक्वमृच्छ गच्छ ।

तत्रान्वेषणं कुर्वित्यर्थः ॥ ७ ॥

**सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तं॑ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहं॑ ह्यरा३ इति ह प्रतिजज्ञे स ह क्षत्ताऽन्विष्याविदमिति प्रत्येयाय ॥ ८ ॥ १ ॥**

एवमुक्तः स क्षत्ता तथैवान्विष्य क्वचिच्छकटस्याधस्तात् पामानं कषमाणं कण्डूयमानं दृष्ट्वा तत्समीपे उपविष्टवान् । उपविष्टः सन् तं रैक्वमभ्युवाद । किमिति ? हे भगवः! भगवन्! त्वं नु सयुग्वा रैक्वोऽसि नु किमित्यभ्युवादेत्यर्थः । इति पृष्टः स मुनिराह । अरे अहं हि रैक्वः । हि प्रसिद्धः, इति प्रतिजज्ञे प्रतिज्ञामकरोत् प्रत्युवाचेति यावत् । पामकषण-भावे अरा ३ इति प्लुतिः । स ह क्षत्ता अविदं ज्ञातवानस्मि रैक्वमिति प्रत्येयाय ॥ ८ ॥ **इति प्रथमः खण्डः** ॥

## अथ द्वितीयः खण्डः

*(रैक्वस्य वैराग्यम् )*

**तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तं॑ हाभ्युवाद ॥ १ ॥**

तदुह तदैव । तेन ज्ञात्वा अभ्यागतत्वादेवेति वाऽर्थः । जानश्रुतिः पौत्रायणः गवां षट्शतानि निष्कं हाररूपम् अश्वतरीभिर्युक्तं रथमश्वतरीरथम्, अश्वतर्यश्चाश्वैर्गर्दभीषु जाताः । आदाय तत् तत्र रैक्वस्थले प्रतिचक्रमे गतवान् । तत्र गत्वा तं रैक्व अभ्युवाद ॥ १ ॥

**रैक्वेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवतां॑ शाधि यां देवतामुपास्स इति ॥ २ ॥**

हे रैक्व ! गवामिमानि षट्शतानि, अयं निष्कः, अयं अश्वतरीरथः एतत्सर्वं गृहीत्वा प्रसन्नः सन् हे भगवः ! त्वं यां देवताम् उपास्से एतां देवतां मे मह्यम् अनुशाधि शिक्षय; उपदिशेति यावत् ॥ २ ॥

**तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति तदुह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३ ॥**

तं राजानं परो रैक्वः प्रत्युवाच । अह हे शूद्र! हंसकृतानादर-श्रवणजातशोकाधिक्येनाऽगततया शूद्रेत्युक्तराजन्! तदाह सूत्रेषु– **'शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि'** (ब्र.सू. १-३-३४) इत्यादि । **हारेत्वा** हारश्चेत्वा रथश्च हारेत्वानौ हारेत्वानावेव हारेत्वा । व्यत्ययेन द्विवचनस्यैकवचनम् । हारेण सहित इत्वा हारेत्वेति वा । सेदुराजेत्यादिवद् हार इति भिन्नं पदं वा । गोभिः सह तवैवास्तु इति प्रत्युवाचेत्यन्वयः । तदु ह तस्मादेव तेनैवं प्रत्याख्यातत्वादेव ह पुनर्जानश्रुतिः पौत्रायणो राजा पुरमागत्य गवां सहस्रं निष्कम् अश्वतरीरथं दुहितरं कन्यां चाऽदाय तत् तत्र प्रतिचक्रमे जगाम ॥ ३ ॥

**तꣳ हाभ्युवाद रैक्वेदꣳ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥ ४ ॥**

गत्वा तं रैक्वमभ्युवाद । हा हे रैक्व इदं गवां सहस्रम् अयं निष्कोऽयमश्वतरीरथः इयं जाया यस्मिन् ग्रामे त्वमास्से तिष्ठसि अयं च ग्रामः तत्सर्वं गृहीत्वा हे भगवः! मा माम् अनुशाध्येव अवश्यमनुशाधी-त्यर्थः ॥ ४ ॥

**तस्या ह मुखमुपोद्गृह्णन्नुवाचाऽजहारेमाः शूद्रानेनैव मुखेनाऽलाप-**

**यिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै स होवाच ॥५ ॥२ ॥**

तस्या राजकन्यायाः मुखमुपोद्गृह्णन् पश्यन् इमाः गुरुदक्षिणाः आजहार स्वीकृतवान् । राजानं प्रत्युवाच रैक्वः । हे शूद्र! हंसकृतानादर-श्रवणजातेन शोकेनाऽद्रुत! हे राजन्! गुरुशुश्रूषां विनाऽनेन हारादिमुखे-नैव माऽऽलापयिष्यथा३ इत्युवाचेत्यर्थः । आलापयिष्यसीत्येकवचनार्थे बहुवचनम् । प्लुतिः सन्तोषातिशये । वेदपुरुष आह । ते हैते राजदत्ता ग्रामाः महावृषेषु देशेषु रैक्वपर्णा नाम प्रसिद्धाः । यत्र ग्रामेषु अस्मै राजार्थम् उवास रैक्वः त एत इति पूर्वेणान्वयः । दक्षिणां स्वीकृत्य प्रसन्नो मुनिः तस्मै राज्ञे संवर्गविद्यामुवाच ॥ ५॥ **इति द्वितीयः खण्डः ॥**

## अथ तृतीयः खण्डः

*( रैक्वोपदिष्टसंवर्गविद्या )*

**वायुर्वाव संवर्गो यदा वा महाप्रलये अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥**

रैक्वेनोक्तामधिदैवमध्यात्मं च संवर्गविद्यां संवर्गस्वरूपं च विस्तरेणाऽह वेदपुरुषः । वायुर्वाव मुख्यवायुरेव, संवर्गः संहर्तृतया संवर्ग इत्युक्तः । संहर्तृत्वमेव व्यक्तमाह– **यदेति ॥ उद्वायति** नश्यति । वायुम् अप्येति प्राप्नोति । अग्न्यादयोऽत्र देवता ज्ञेयाः ॥ १ ॥

**यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान् सर्वान् संवृङ्क्त इत्यधिदैवतम् ॥ २ ॥**

आपः अबभिमानिनः । स्वत एवाग्न्यादयो नाशमिताः वायुमपियन्ति किम् ? इत्यत आह– **वायुरिति** ।। एतानग्न्यादिदेवान् संवृङ्क्ते संहरति इत्यधिदैवतं संहर्तृतया संवर्गाख्यं वायो रूपमुक्तमित्यर्थः ।। २ ।।

**अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणꣳ चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति ।। ३ ।।**

**अथाध्यात्मं** तादृग्रूपमुच्यत इत्यर्थः । प्राणाख्यमध्यात्मगतं वायो रूपं संवर्ग इत्युक्तम् । संहर्तृत्वप्रकारमाह – **स यदेति** ।। स जीवः यदा स्वपिति तदा । वागादयोऽत्राध्यात्मगतवह्न्यादिदेवताः । प्राणं चक्षुरित्यादावप्येतीत्यनुषज्यते । एतान् संवृङ्क्ते उपसंहरति । इतिशब्दोऽध्यात्माधिदैवरूपोक्तिसमाप्तौ ।। ३ ।।

**तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ।। ४ ।।**

उक्तमर्थं सङ्गृह्याऽह – **तौ वा एतौ द्वाविति** ।। प्राणेषु वागादीन्द्रियेषु । विषयसप्तमी देवप्राणविषये । संवर्गौ संहर्तृतया संवर्गनामकौ ।। ४ ।।

*( वायुरेव संवर्गः, अस्मिन् विषये ऐतिह्यम् )*

**अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परि-विष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ।। ५ ।।**

उभयत्र मुख्यवायुः संवर्ग इत्युक्तमाख्यायिकयोपपादयति – **अथ हेति** ।। शुनकस्यापत्यं शौनकः । कपेरपत्यं कापेयः तं नामतोऽभिप्रतारिणम् । कक्षसेनस्यापत्यं काक्षसेनिः । परिविष्यमाणौ अन्नं

परिवेषयन्तौ कश्चिद् ब्रह्मचारी बिभिक्षे अन्नं याचितवान् । तस्मै याचितवते । न उ नैव । ददतुर्ह ॥ ५ ॥

**स होवाच महात्मनश्चतुरो देव एकः कः सो जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन् बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६॥**

स ब्रह्मचारी तावुवाच । यो भुवनस्य गोपाः रक्षकः एको देवश्चतुरो महात्मनः प्रागुक्ताग्निसूर्यादीन् जगार गृ निगरणे जग्रास, एतं मर्त्याः बहुधा वसन्तं नाभिपश्यन्ति हे कापेय हे अभिप्रतारिन् ! स कः यस्मै वा यस्य वै एतदन्नं तस्मा एतदन्नं दत्तं प्रयच्छतमित्युवाचेत्यन्वयः ॥ ६ ॥

**तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायाऽत्मा देवानां जनिता प्रजानाꣳ हिरण्यदꣳष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्निदमुपास्महे दत्तास्मै भिक्षामिति ॥ ७ ॥**

शौनकः कापेयः तदुह ब्रह्मचारिपृष्टमेव प्रतिमन्वानः विचारयन् प्रत्येयाय ज्ञातवान् । ज्ञात्वा च ब्रह्मचारिणं प्रत्युवाच चेति ग्राह्यम् । तदाह– **आत्मेत्यादिना ॥ देवानामात्मा** आदानादिकर्ता स्वामीति यावत्, **प्रजानां जनिता** जनयिता, **हिरण्यदंष्ट्रः**, **बभसः** भक्षकः, अनः चेष्टकः सूरिर्ज्ञानी चेत्यनसूरिः प्राण इत्यर्थः । अस्य प्राणस्य महान्तं महिमानमाहुः प्राज्ञाः । तमेव महिमानमाह । अनद्यमानोऽनन्नमन्यैरत्तुमशक्यमग्न्याद्यन्नमद् यद् यस्मात् तस्मात् महान्तं महिमानमस्याऽहुरित्यर्थः । इति प्रत्युवाचेतीतिपदस्यान्वयः । भो ब्रह्मचारिन्! ते तज्ज्ञानिनो वयम् एतं प्राणमुपास्महे । अस्मै प्राणाय ब्रह्मचारिस्थिताय ।

भिक्षां दत्त प्रयच्छत भृत्या इति चोवाचेत्यर्थः ॥ ७ ॥

**तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात् सर्वासु दिक्ष्वन्नमेव दश कृतꣳ सैषा विराडन्नादी तयेदꣳ सर्वं दृष्टꣳ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥ ८ ॥ इति तृतीयः खण्डः ॥**

एवमुक्ताः ते अस्मै भिक्षां ददुः । एवं तर्हि प्राण एव सर्वमुत्पाद्य संहर्ता किम् ? इत्यतो नेत्याह– **ते वा इति** ॥ एते वायुना सहाग्न्यादयो येऽधिदैवताः पञ्च तथाऽध्यात्मगताश्च प्राणेन सहान्ये वागादयः पञ्च दश सन्तः दशसङ्ख्याका भूत्वा तत्कृतं तद् दशदेवताजातं कृतं पूर्णं पूर्णमन्नमित्यर्थः । तस्मादग्न्यादेरधिदैवाध्यात्मभेदेनाष्टत्वेऽपि वायुना सह दशसङ्ख्यापूरणात् सर्वासु दिक्षु स्थिताः दशदेवताः कृतं पूर्णमन्नम् । एते दश कस्यान्नमित्यत आह– **सैषेति** ॥ सा प्रसिद्धा एषा अन्नदेवता विराड् विशेषेण राजमानो विष्णुरेवान्नादी । सर्वात्तृत्वोपयुक्तं सार्वज्ञमाह । तया विराट्शब्दितविष्णुदेवतया । इदं सर्वं जगद् दृष्टम् । फलमाह– **सर्वमिति** ॥ योऽधिकारी । एवं वायुः स्वयं सकलसंहर्तृतया संवर्गनामा सन् हरेरन्नमिति यो वेद सोऽन्नादो भवति । अस्य अनेन । स्वयोग्यं सर्वं दृष्टं भवति । सर्वज्ञो भवतीत्यर्थः ॥ ८ ॥ ३ ॥

## अथ चतुर्थः खण्डः

*( जाबालसत्यकामोपाख्यानम् )*

**सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि किङ्गोत्रो न्वहमस्मीति ॥ १ ॥**

पूर्वं 'तदेतच्चतुष्पाद् ब्रह्म वाक्पादः' इत्यादिना वासुदेवादि-चतुर्मूर्तिविद्योक्ता । अधुना प्रत्येकं चतूरूपाणां वासुदेवादीनामेव विद्यामाख्यायिकयाऽऽह– षड्भिः खण्डैः **सत्यकाम इत्यादिभिः** ॥ **सत्यकामो** नामतः । जबालापुत्रो **जाबालः** आमन्त्रयाञ्चक्रे सम्बोधितवान् । **भवति** हे भवति ! **ब्रह्मचर्यं** ब्रह्मचारित्वं **विवत्स्यामि वै**[1] ब्रह्मचर्यमुद्दिश्याऽऽचार्यकुले विशेषेण वासं करिष्यामि । किङ्गोत्रः बहुव्रीहिः । अहमस्मीत्यामन्त्र्य मातरमुवाचेत्यर्थः ॥ १ ॥

**सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रुवीथा इति ॥ २ ॥**

सा मातैनमुवाच । हे तात! पुत्र! यद्गोत्रस्त्वमसीत्येतदहं न वेद । कुत इत्यत आह– अहं भर्तृगृहे बहुकर्म चरन्ती कुर्वन्ती परिचर्याकारिणी यौवने त्वामलभे लब्धवत्यस्मि । अतो व्यासक्तचित्ता अहं यद्गोत्रस्त्वमसीत्येतन्न वेद । जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि । सत्यकाम एव जाबालोऽहमस्मीत्येवाऽऽचार्यं प्रति ब्रूया इत्युवाचेत्यर्थः ॥ २ ॥

**स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ॥ ३ ॥**

स सत्यकामः हारिद्रुमतोऽपत्यं गौतममेत्य प्राप्योवाच । भगवति पूज्ये त्वयि ब्रह्मचर्यमुद्दिश्य वत्स्यामि । भगवन्तं त्वामुपेयाम् उपगच्छामि शिष्यो भवानीत्युवाचेत्यर्थः ॥ ३ ॥

---

१. मन्त्रे 'वै' इति न दृश्यते ।

**तꣳहोवाच किङ्गोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरꣳ सा मा प्रत्यब्रवीद् बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽहꣳसत्यकामो जाबालोऽस्मि भो इति ॥ ४ ॥**

तं सत्यकामं गौतम उवाच ह । हे सोम्य ! किङ्गोत्रोऽसीति । इति पृष्टः सत्यकाम उवाच **नाहमित्यादिना जाबालोऽस्मि भो इत्यन्तेन** । अपृच्छं पृष्टवानस्मि । मा माम् । नाहमित्यादेः प्राग्वदर्थः ॥ ४ ॥

**तꣳ होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधꣳ सोम्याऽऽहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशतं गा निराकृत्योवाचेमाः सोम्यानु संव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणाऽवर्तेयमिति स ह वर्षगणं प्रोवास ता यदा सहस्रꣳ सम्पेदुः ॥ ५ ॥**

एतद् यथास्थितत्वम् अब्राह्मणः त्रैवर्णिकान्यो विवक्तुं नार्हत्यतोऽयं ब्राह्मण इति तदीयार्जवेन निश्चित्य तं सत्यकाममुवाच । हे सोम्य ! सोमपानार्ह! समिधमाहर । त्वा त्वाम् उपनेष्यामि । उपनीतं करिष्यामि । यस्मात् त्वं सत्यात् सत्यवचनान्नागाः सत्यवचनं न त्यक्तवानसि , अत इति योजना । तं सत्यकाममुपनीय गौतमः कृशानाम् अबलानां बलहीनानां मध्ये चतुःशतं गाः गवां चत्वारि शतानि निराकृत्य बहिर्निष्क्राम्य हे सोम्येमाः गाः अनुगच्छ अरण्यं नीत्वा तृणादनादि कारयेत्युवाच । सत्यकामस्ताः अभिप्रस्थापयन् बहिर्गमयन् असहस्रेण सहस्रं गा असम्पाद्य नाऽवर्तेयं नाऽगच्छेयमित्युवाच । स एवमुक्तवान् सत्यकामो गाः वनं नीत्वा तत्रैव वर्षगणं गोसहस्रसम्पत्तिपर्यन्तमब्दसङ्घं

प्रोवास प्रवासाञ्चक्रे, ता गावो यदा सहस्रं सम्पेदुः सम्पन्नाः ॥ ५ ॥ ४ ॥

## अथ पञ्चमः खण्डः

*( ऋषभरूपिवायुना वासुदेवाख्यरूपोपदेशः )*

**अथ हैनमृषभोऽभ्युवाद सत्यकामा ३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्र्ँ स्मः प्रापय न आचार्यकुलम् ॥ १ ॥**

अथ तदा एनं सत्यकाममृषभः ऋषभाविष्टो वायुः अभ्युवाद उच्चैरुवाच । हे सत्यकाम३ ! 'आमन्त्रिते च' इति प्लुतः । इत्यभ्युवादेत्यन्वयः । हे भगव इति प्रतिशुश्राव श्रावयति स्म ह । हे सोम्य ! सहस्रं सहस्रसङ्ख्यां वयं प्राप्ताः स्मः । नोऽस्मानाचार्यकुलम् आचार्यगृहं प्रापय ॥ १ ॥

**ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै स होवाच प्राची दिक् कला प्रतीची दिक् कला दक्षिणा दिक् कलोदीची दिक् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥ २ ॥**

ते तुभ्यं ब्रह्मणः पादं ब्रवाणि इति प्रोवाच ऋषभस्थो वायुरित्यर्थः । एवमुक्तः सत्यकाम आह । मे मह्यं भगवान् ब्रवीत्विति । तस्मै होवाच ऋषभाविष्टो वायुः । प्राच्यां दिशि तन्नियन्तृतया स्थितः प्राचीदिङ्नामा वासुदेववासुदेवात्मा कला एकं ब्रह्मणः पादस्याऽद्यं रूपम् । प्रतीची दिक् प्रतीचीदिङ्नामा प्रतीच्यां दिशि स्थितो वासुदेवसङ्कर्षणात्मककला ब्रह्मणः पादस्य वासुदेवस्य द्वितीयं रूपम् । दक्षिणा दिक् दक्षिणदिशि स्थितो दक्षिणदिङ्नामा वासुदेवप्रद्युम्नः कला ब्रह्मणः पादस्य तृतीयं रूपम् । उदीची दिग् उदग्दिक्स्थितः उदग्दिङ्नामा वासुदेवानिरुद्धः कला ब्रह्मणः पादस्य चतुर्थं रूपम् । उपसंहरति– **एवमिति** ॥ हे सोम्य !

ब्रह्मणो हरेरेषः वासुदेवाख्यः चतुष्कलः उक्तदिशा वासुदेवादिचतुरात्मकः पादः प्रकाशवान् नाम प्रसिद्धम् । प्रकाशवानिति सञ्ज्ञक इति यावत् ॥ २ ॥

**स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो ह लोकान् जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥ ५ ॥**

योऽधिकारी एतं ब्रह्मणः प्रथमपादभूतं वासुदेवरूपम् एवं चतुरात्मना प्राच्यादिदिङ्नामकतया चतुर्दिक्षु वर्तत इत्येवम्प्रकारेण विद्वान् जानन् ब्रह्मणो हरेः चतूरूपात्मकपादं वासुदेवं प्रकाशवानित्युपास्ते प्रकाशवान् प्रख्यातः इत्यैहिकफलं व्यक्तम् । य एतदिति पुनर्वचनं प्रकाशवत इत्यामुष्मिकफलोक्त्यर्थम् ॥ ३ ॥**इति पञ्चमः खण्डः ॥**

## अथ षष्ठः खण्डः

*( अग्निना सङ्कर्षणाख्यभगवद्रूपोपदेशः )*

**अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिध-माधाय पश्चादग्नेः प्राङ् उपोपविवेश ॥ १ ॥**

॥ **अग्निरिति** ॥ वृषभाविष्टो वायुर्वासुदेवाख्यमेकं ब्रह्मणः पादमुक्त्वा ते अग्निर्देवता सङ्कर्षणाख्यं पादं वक्ता वक्ष्यतीत्युवाचेत्यर्थः । स आचार्यकुलं नः प्रापयेति वृषभाविष्टवायुनोदितः सत्यकामः श्वोभूते परेद्युः गाः अभि आचार्यगृहं प्रति प्रस्थापयाञ्चकार यापितवान् । ताः आचार्यगृहाभिमुखा गावः यत्र देशे अभिसायं बभूवः सायं प्राप्ता इति यावत्, तत्र देशे गाः उपरुध्य निरुध्याग्निमुपसमाधाय प्रतिष्ठाप्य समिध-

माधाय अग्रेः पश्चात् प्राङ्मुख उपोपविवेश ॥ १ ॥

**तमग्निरभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥**

तमग्निरित्यादेस्तस्मै स होवाचेत्यन्तस्य प्रागिवार्थो ध्येयः ॥ २ ॥

**ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै स होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥**

**स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यनन्तवतो ह लोकान् जयति य एतमेवंविद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४ ॥ ६ ॥**

पादं सङ्कर्षणाख्यं रूपम् । तस्य पादस्य चतुष्कलत्वमाह –**पृथिवीति** ॥ प्रथितत्वहेतुना पृथिवीनामकं पृथिवीनियन्तृतया पृथिवीसंस्थं सङ्कर्षणवासुदेवाख्यं कला एकं रूपं ब्रह्मणः पादभूतस्य सङ्कर्षणस्य । एवमग्रेऽपि ध्येयम् । अन्तरिक्षनियन्तृतयाऽन्तरिक्षस्थमन्तरिक्षनामकं सङ्कर्षणसङ्कर्षणात्मकं कला द्वितीयं रूपम् । द्यौः द्युनियन्तृतया द्युस्थं द्युनामकं सङ्कर्षणप्रद्युम्नाख्यं कला तृतीयं रूपम् । समुद्रनियन्तृतया समुद्रस्थं तन्नामकं सङ्कर्षणानिरुद्धाख्यं कला चतुर्थं रूपम् । 'एष वै' इत्यादेः प्राग्वदर्थः । अनन्तवान् नाम अनन्तवत्सञ्ज्ञकः ॥ ३-४ ॥ ६ ॥

### अथ सप्तमः खण्डः

*( हंसरूपिणा चतुर्मुखब्रह्मणा प्रद्युम्नाख्यभगवद्रूपोपदेशः )*

**हꣳसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिध-**

**माधाय पश्चादग्नेः प्राङ् उपोपविवेश ॥ १ ॥**

एवमग्निदेवः सङ्कर्षणाख्यं चतूरूपं ब्रह्मणः पादमुक्त्वा हंसो हंसरूपी चतुर्मुखः ते पादं प्रद्युम्नाख्यं ब्रह्मणः पादं वक्तेत्युवाचेत्यर्थः। स ह श्वोभूत इत्यादि प्राग्वत् ॥ १ ॥

**तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥**

हंसो हंसरूपी ब्रह्मा उपनिपत्य आगत्य ॥ २ ॥

**ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै स होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥**

**स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकान् जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥ ७ ॥**

पादं प्रद्युम्नाख्यं रूपम्। अग्निः कलेति अग्निनियन्तृतया अग्निस्थितमग्निनामकं प्रद्युम्नवासुदेवाख्यं ब्रह्मणः पादभूतस्य प्रद्युम्नस्य कला आद्यं रूपम्। सूर्यनियन्तृतया सूर्यस्थितं सूर्यनामकं प्रद्युम्नसङ्कर्षणाख्यं कला द्वितीयं रूपम्। चन्द्रनियन्तृतया चन्द्रस्थं चन्द्रनामकं प्रद्युम्नप्रद्युम्नाख्यं कला तृतीयं रूपम्। विद्युन्नियन्तृतया विद्युद्गतं विद्युन्नामकं प्रद्युम्नानिरुद्धाख्यं कला ब्रह्मणः पादस्य प्रद्युम्नस्य चतुर्थं रूपम्। 'एष वै' इत्यादि प्राग्वत्। तस्य प्रद्युम्नस्य सञ्ज्ञामाह – ज्योतिष्मान्नामेति ॥ ३-४ ॥

॥ इति सप्तमः खण्डः ॥

## अथ अष्टमः खण्डः

*( मद्गुरूपिवरुणेनानिरुद्धरूपोपदेशः )*

**मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङ् उपोपविवेश ॥ १ ॥**

एवं हंसरूपी विरिञ्चः प्रद्युम्नाख्यं वासुदेवादिचतुरात्मना स्थितं ब्रह्मणः पादमुक्त्वा मद्गुर्जलवायसरूपो वरुणस्तेऽनिरुद्धाख्यं ब्रह्मणः पादं वक्तेत्यप्युवाचेत्यर्थः। स ह श्वोभूत इत्यादि प्राग्वत् ॥ १ ॥

**तं मद्गुरुपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥**

मद्गुः जलवायसरूपो वरुणः उपनिपत्य आगत्य ॥ २ ॥

**ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै स होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम ॥ ३ ॥**

**स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके भवत्यायतनवतो ह लोकान् जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥ ८ ॥**

पादमनिरुद्धाख्यं रूपं ब्रवाणीत्यभ्युवाद। प्राणः कला प्राणनियन्तृतया प्राणेन्द्रियस्थं[१] प्राणनामकम् अनिरुद्धवासुदेवाख्यं ब्रह्मणः

१. 'घ्राणेन्द्रियस्थम्' इति पाठान्तरम्।

पादभूतानिरुद्धस्य कला आद्यं रूपम् । चक्षुर्नियन्तृतया चक्षुःस्थं चक्षुर्नामकं अनिरुद्धसङ्कर्षणाख्यं कला पादभूतानिरुद्धस्य द्वितीयं रूपम् । श्रोत्रस्थं श्रोत्रनामकम् अनिरुद्धप्रद्युम्नाख्यं कला तृतीयं रूपम् । मनःस्थं मनोनामकम् अनिरुद्धानिरुद्धाख्यं कला चतुर्थं रूपम् । आयतनवान् अवस्थानवान् । शिष्टं प्राग्वद् ध्येयम् ।। ३-४ ।। **इति अष्टमः खण्डः ।।**

## अथ नवमः खण्डः

**प्राप हाऽऽचार्यकुलं तमाचार्योऽभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव　　।। १ ।।**

वनान्निर्गतः सत्यकामो मार्गे त्रिरात्रीर्नीत्वा चतुर्थेऽह्नि आचार्यकुलं प्राप ह । तं सत्यकाममाचार्योऽभ्युवाद । सत्यकामेत्यादि प्राग्वत् ।।१।।

**ब्रह्मविदिव वै सोम्य भासि को नु त्वाऽनुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवांस्त्वेव मे कामे ब्रूयात्　　।। २ ।।**

हे सोम्य ! ब्रह्मविदिव भासि प्रकाशसे । त्वा त्वां कोऽनुशशास शिक्षितवान्, इत्याचार्योऽभ्युवादेत्यर्थः । मनुष्येभ्योऽन्येऽनुशिक्षितवन्त इति सत्यकामः प्रतिजज्ञे प्रतिज्ञातवान्, उवाचेति यावत् । तर्हि मयाऽनुशासितव्यं नास्ति किम् ? इत्यत आह – **भगवानिति** ।। मे कामे कामाय मदभीष्टसिद्ध्यर्थं भगवांस्त्वेव ब्रूयात्　　।। २ ।।

**श्रुतꣳ ह्येव मे भगवद्दृशेभ्य आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापयतीति तस्मै हैतदेवोवाचात्र ह न किञ्चन वीयायेति वीयायेति　　।।४ ।। ९ ।।**

कुतो मयैव वाच्यमित्यत आह – **श्रुतमिति** ।। भगवद्दृशेभ्यो

महानुभावेभ्यः श्रुतमेव । तथाऽप्याचार्यादेव हि विद्या विदिता साधिष्ठं स्थिरत्वं साधुत्वं च प्राप्नोति हि यतोऽतस्त्वयैव वाच्यम् । त्वमेव हि मया आचार्यत्वेन वृतो न वृषभाविष्टवाय्वग्निब्रह्मवरुणाः । तेऽपि नाऽचार्य-बुद्ध्या मामनुशिक्षितवन्तोऽतस्त्वयैव कामाय मे वाच्यमिति । तदाह सूत्रे – **'लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि'**(ब्र. सू. ३.३.४५) इति । एवं प्रार्थित आचार्यः एतस्मै सत्यकामाय एतदेव वाय्वादिभि-रुक्तमेवोवाच । गुरुत्वेन वृताद् भवतोऽन्येभ्यः श्रवणेन ममापराधो जातः किमिति भावयन्त प्रत्याह **अत्र हेति** ॥ देवेभ्यः श्रुतविषये न किञ्चन वीयाय न काचिद्धानिरभूत् । देवेभ्यः श्रवणेन ते न कोऽप्यपराधो जात इत्यर्थः । उक्तमेव निर्धारयति – **अत्र हेति** पुनर्वचनेन ॥ ३ ॥ ९ ॥

## अथ दशमः खण्डः

*( उपकोसलोपाख्यानम् )*

**उपकोसलो हवै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य ह द्वादश वर्षाण्यग्नीन् परिचचार स ह स्मान्यानन्तेवासिनः समावर्तयꣳस्तꣳ ह स्मैव न समावर्तयति ॥ १ ॥**

प्रकारान्तरेण चतुर्मूर्तिविषयविद्यां, ज्ञानिना ज्ञातव्यं मुक्तिकाले गन्तव्यमार्गं च वक्ष्यन् तदुपयुक्तां तावत् परापरब्रह्मनिष्ठां विद्यामा-ख्यायिकयाऽऽह– **उपकोसल इति** ॥ उपकोसलो नामतः, कामलस्या-पत्यं कामलायनः । ब्रह्मचर्यं ब्रह्मप्राप्त्यर्थं चरणमुद्दिश्योवास । तस्य सत्यकामस्य । अग्नीन् गार्हपत्याहवनीयान्वाहार्यपचनरूपान् त्रीन् अग्नीन् द्वादशवर्षाणि परिचचार ।

सः सत्यकामः अन्यानन्तेवासिनः शिष्यान् समावर्तयन् ब्रह्मोपदिश्य

समावर्तनं कारयन् स्वस्वगृहं प्रति गन्तुमनुजानन् तमुपकोसलं नैव समावर्तयति । ह स्मेत्याश्चर्ये ॥ १ ॥

**तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन् परिचचारीन्मा त्वाऽग्नयः परिप्रावोचन् प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे ॥ २ ॥**

तं भर्तारं सत्यकामं जायोवाच । ब्रह्मचारी तप्तः क्लिष्टः सन् अग्नीन् कुशलं यथा तथा परिचचारीत् पर्यचारीत् । चशब्दात् त्वां मां च पर्यचारीदित्यर्थः । ब्रह्मचारिणा परिचारिता अप्यग्नयस्त्वां प्रति ब्रह्मास्मै प्रब्रूहीति मा परिप्रावोचन् नैवोक्तवन्तः । प्रब्रूह्यस्मा इति जायोवाचेत्यन्वयः । तस्मै उपकोसलायाऽप्रोच्यैव ब्रह्मानुपदिश्यैव प्रवासाञ्चक्रे प्रोषितवान् ॥ २ ॥

*( अग्निभिःकृतः मुख्यप्राणपरब्रह्मोपदेशः )*

**स ह व्याधिनाऽनशितुं दध्रे तमाचार्यजायोवाच ब्रह्मचारि-न्नशान किं नु नाश्नासीति स होवाच बहव इमेऽस्मिन् पुरुषे कामा नानात्यया व्याधिभिः परिपूर्णोऽस्मि नाशिष्यामीति ॥ ३ ॥**

स उपकोसलो व्याधिना विशिष्टाधिना महामनोव्यथया अनशितुमभोक्तुं दध्रे मनश्चकार । तमुपकोसलम् । अशान भुङ्क्ष्व । किन्नु किमर्थं नाश्नासि न भुङ्क्षे ? स उपकोसल उवाच । नानात्ययाः नानाप्रकाराः बहवः कामाः अस्मिन् पुरुषे कामाः कामनाविषयाः बहवः सन्ति । व्याधिभिः महामनोव्यथाभिः परिपूर्णोऽस्मि । अतो नाशिष्यामीत्युवाचेत्यन्वयः ॥ ३ ॥

**अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्यचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः ॥ ४ ॥**

अथ गुरोर्निर्गमनानन्तरमिति वा, गुरुणा ब्रह्मणोऽनुपदिष्टत्वादिति वा, आत्मनां परिचर्याकरणादिति वा अथेत्यस्यार्थः । अग्नयः गार्हपत्यादयस्त्रयोऽग्निदेवाः समूदिरे परस्परमूचुः । किमिति ? तप्तो ब्रह्मचारी कुशलं यथा तथा नोऽस्मान् परिचचारीत् पर्यचारीत् । अस्मै ब्रह्मचारिणे ब्रह्म प्रब्रवाम । हन्त हर्षे । इत्यूचुरित्यन्वयः । इत्यन्योन्यं सम्भाष्य होमकुण्डेभ्य उत्थितास्त्रयोऽग्निदेवास्तस्मै ब्रह्मोचुर्ह ॥ ४ ॥

**प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः ॥ ५ ॥ १० ॥**

कथम् ? **'प्राणो ब्रह्म, कं ब्रह्म, खं ब्रह्म'** इति । प्राणो बलदेवता मुख्यवायुः ब्रह्म अपरं ब्रह्म । कं नैजपरिपूर्णसुखरूपं विष्ण्वाख्यं ब्रह्म । खं परिपूर्णज्ञानबलात्मकं विष्ण्वाख्यं ब्रह्मेत्यूचुरित्यर्थः । सूत्रभाष्ये तु ब्रह्मपदं न विशेष्यपरं किन्तु कखयोः पूर्णत्वरूपविशेषणपरमित्यभि-प्रेतम् । तदाह सूत्रे **'सुखविशिष्टाभिधानादेव च'**(ब्र.सू.१.२.१५) इति । स एवमुक्त उपकोसल उवाच । प्राणो ब्रह्मेति यदुक्तं तद् विजानामि । प्राणस्य मुख्यवायुतया प्रसिद्धेः । कं च तु खं च न विजानामि । ते किं प्राणादिवान्योन्यं भिन्ने, उताभिन्ने इति न विजानामीत्युवाचेत्यर्थः । एवमुक्तास्ते अग्नयस्तयोरभेदमूचुः – **यद्वाव कमिति** ॥ यदेव खं तदेव कमिति पुनर्व्यत्यासेन वचनं मात्रयाऽपि न भेदः केवलं विशेषबलेनाऽनन्दरूपो ज्ञानबलरूप इति भेदेन व्यवहारमात्रमिति द्योतयितुम् । प्राणं मुख्यवायुं आ समन्तात् काशते दीप्यत इति व्युत्पत्त्या आकाशाख्यं व्याप्तं हरिं च परापरब्रह्मद्वयमूचुरित्यर्थः ॥ ५ ॥ १० ॥

## अथ एकादशः खण्डः

*( गार्हपत्याग्निना पृथिव्यादिस्थभगवदुपदेशः )*

**अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

एवमग्निभिः सम्भूयोक्तां परापरब्रह्मनिष्ठां विद्यामुक्त्वा प्रत्येकं प्रत्येकं तैरुक्तां चतुर्मूर्तिविषयां विद्यामाह वेदपुरुषः– **अथ हैनमित्यादित्रिभिः पर्वभिः ॥** अथेत्यस्य विद्यान्तरमुच्यत इत्यर्थः । एवमग्रेऽपि । एनमुपकोसलमनुशशास । तत्प्रकारमाह– **पृथिवीति ॥** पृथुत्वहेतुना पृथिवीनामकम्, ब्रह्मेति चतुर्ष्वपि योज्यम् । अङ्गनेतृत्वेनाग्निनामकम् अग्निस्थं ब्रह्म । अत्तृत्वहेतुनाऽन्ननामकमन्नस्थं ब्रह्म । नित्यमादिरूपतया आदित्यनामकमादित्यस्थं ब्रह्मेति पृथिव्यादिनामकानि चत्वारि रूपाणि 'पृथिवी ब्रह्म' इत्यादिरूपेणानुशशासेत्यर्थः । स्थानभेदेन रूपाणां भेदो न शङ्क्य इति भावेन पृथिव्याद्यन्तर्यामिणः स्वान्तर्यामिणश्चाभेदमाह– **य एष इति ॥** आदित्य इत्युपलक्षणम् । पृथिव्यग्न्यन्नादित्येषु य एष पुरुषो हरिर्दृश्यते दिव्यदृष्टिविषयोऽस्ति सोऽहमहेयत्वहेतुना चेतनखण्डतया वर्तमानोऽस्मि । इन्द्रार्जुनादिवद-वान्तरविशेषोऽपि नेति भावेनाऽह– **स एवाहमस्मीति ॥** सोऽहमस्मीति पूर्वोक्तिरभेदे तात्पर्याधिक्यज्ञापनार्था । इति चानुशाशासेतीतिपदस्य पूर्वेणान्वयः ॥ १ ॥

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग् जीवति नास्यापरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥२॥११॥**

योऽधिकारी एतं पृथिव्यादिचतुष्टयान्तर्यामिणमेवं गार्हपत्यान्त-

र्याम्यभेदेन विद्वानुपास्ते सः पापकृत्यामपहते अपहन्ति लोकी भगवल्लोकवान् भवति सर्वमायुरेति उत्तरावधिशून्यायुष्मान् भवति । ज्योक् प्रकाशवान् जीवति अस्योपासकस्यापरपुरुषाः भृत्यजनाः न क्षीयन्ते, भृत्यवानेव भवतीत्यर्थः । य एवं विद्वानुपास्ते तं वयमुपभुञ्जामः पालयामो लोकद्वयेऽपीत्यग्नय ऊचुरित्यर्थः ॥ २ ॥ **इति खण्डः ११ ॥**

**अथ द्वादशः खण्डः**

*( अन्वाहार्यपचनाग्निना जलादिस्थभगवदुपदेशः )*

**अथ हैनमन्वाहार्यपचनोऽनुशशासाऽपो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग् जीवति नास्यापरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ १२ ॥**

अथ गार्हपत्योपदेशानन्तरम्, 'अन्वाहार्यश्चरुः पच्यतेऽत्र' इत्यन्वाहार्यपचननामा दक्षिणाग्निः किमित्यनुशशासेत्यत आह– **आपो दिशो नक्षत्राणि चन्द्रमा इति** प्रत्येकं ब्रह्मपदान्वयः ॥ आ समन्तात् पालनहेतुनाऽऽप इत्युक्तोऽप्सु स्थितः, ब्रह्म । अभीष्टदेशनाद्दिङ्नामा दिक्षु स्थितः, ब्रह्म । अनन्याधीनत्वहेतुना नक्षत्रनामा नक्षत्रगतः, ब्रह्म । आनन्दरूपतया चन्द्रनामा चन्द्रान्तःस्थो यः सः ब्रह्मेत्यर्थः । **य एष** इत्यादेः पूर्ववदेव गमनिका अर्थश्च ज्ञेयः ॥ १ ॥ २ ॥ खण्डः – १२ ॥

## अथ एकादशः खण्डः

*( गार्हपत्याग्निना पृथिव्यादिस्थभगवदुपदेशः )*

**अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

एवमग्निभिः सम्भूयोक्तां परापरब्रह्मनिष्ठां विद्यामुक्त्वा प्रत्येकं प्रत्येकं तैरुक्तां चतुर्मूर्तिविषयां विद्यामाह वेदपुरुषः– **अथ हैनमित्यादित्रिभिः पर्वभिः** ॥ अथेत्यस्य विद्यान्तरमुच्यत इत्यर्थः । एवमग्रेऽपि । एनमुपकोसलमनुशशास । तत्प्रकारमाह– **पृथिवीति** ॥ पृथुत्वहेतुना पृथिवीनामकम्, ब्रह्मेति चतुर्ष्वपि योज्यम् । अङ्गनेतृत्वेनाग्निनामकम् अग्निस्थं ब्रह्म । अत्तृत्वहेतुनाऽन्ननामकमन्नस्थं ब्रह्म । नित्यमादिरूपतया आदित्यनामकमादित्यस्थं ब्रह्मेति पृथिव्यादिनामकानि चत्वारि रूपाणि 'पृथिवी ब्रह्म' इत्यादिरूपेणानुशशासेत्यर्थः । स्थानभेदेन रूपाणां भेदो न शङ्क्य इति भावेन पृथिव्याद्यन्तर्यामिणः स्वान्तर्यामिणश्चाभेदमाह– **य एष इति** ॥ आदित्य इत्युपलक्षणम् । पृथिव्यग्न्यन्नादित्येषु य एष पुरुषो हरिर्दृश्यते दिव्यदृष्टिविषयोऽस्ति सोऽहमहेयत्वहेतुना चेतनखण्डतया वर्तमानोऽस्मि । इन्द्रार्जुनादिवद-वान्तरविशेषोऽपि नेति भावेनाऽह– **स एवाहमस्मीति** ॥ सोऽहमस्मीति पूर्वोक्तिरभेदे तात्पर्याधिक्यज्ञापनार्था । इति चानुशशासेतीतिपदस्य पूर्वेणान्वयः ॥ १ ॥

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग् जीवति नास्यापरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥२॥११॥**

योऽधिकारी एतं पृथिव्यादिचतुष्टयान्तर्यामिणमेवं गार्हपत्यान्त-

र्यम्यभेदेन विद्वानुपास्ते सः पापकृत्यामपहते अपहन्ति लोकी भगवल्लोकवान् भवति सर्वमायुरेति उत्तरावधिशून्यायुष्मान् भवति । ज्योक् प्रकाशवान् जीवति अस्योपासकस्यापरपुरुषाः भृत्यजनाः न क्षीयन्ते, भृत्यवानेव भवतीत्यर्थः । य एवं विद्वानुपास्ते तं वयमुपभुञ्जामः पालयामो लोकद्वयेऽपीत्यग्नय ऊचुरित्यर्थः ॥ २ ॥ **इति खण्डः ११ ॥**

## अथ द्वादशः खण्डः

*( अन्वाहार्यपचनाग्निना जलादिस्थभगवदुपदेशः )*

**अथ हैनमन्वाहार्यपचनोऽनुशशासाऽपो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग् जीवति नास्यापरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ १२ ॥**

अथ गार्हपत्योपदेशानन्तरम्, 'अन्वाहार्यश्चरुः पच्यतेऽत्र' इत्यन्वाहार्यपचननामा दक्षिणाग्निः किमित्यनुशशासेत्यत आह– **आपो दिशो नक्षत्राणि चन्द्रमा इति** प्रत्येकं ब्रह्मपदान्वयः ॥ आ समन्तात् पालनहेतुनाऽऽप इत्युक्तोऽप्सु स्थितः, ब्रह्म । अभीष्टदेशनाद्दिङ्नामा दिक्षु स्थितः, ब्रह्म । अनन्याधीनत्वहेतुना नक्षत्रनामा नक्षत्रगतः, ब्रह्म । आनन्दरूपतया चन्द्रनामा चन्द्रान्तःस्थो यः सः ब्रह्मेत्यर्थः । **य एष** इत्यादेः पूर्ववदेव गमनिका अर्थश्च ज्ञेयः ॥ १ ॥ २ ॥ खण्डः – १२ ॥

## अथ त्रयोदशः खण्डः

*( आहवनीयाग्निना प्राणादिस्थभगवदुपदेशः )*

**अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग् जीवति नास्यापरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ १३ ॥**

अथेति प्राग्वत् । प्राणो ब्रह्म, आकाशो ब्रह्म, द्यौर्ब्रह्म, विद्युद् ब्रह्मेत्यनुशशासेत्यन्वयः । प्राणस्थो बलरूपत्वात् प्राणनामा । पदार्थपूरणावकाशदातृतयाऽऽकाशनामाऽऽकाशस्थः । प्रकाशरूपत्वाद् द्यौर्नामा । वेदनाद् विद्युन्नामेत्यर्थः । य एष विद्युतीत्यादि पूर्ववत् ॥ १ ॥ २ ॥

इति त्रयोदशः खण्डः ॥

## अथ चतुर्दशः खण्डः

*( उपकोसलमुखे ब्रह्मवर्चः )*

**ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या चाऽचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याऽचार्यस्तमाचार्योऽभ्युवादोपकोसला ३ इति ॥ १ ॥**

एवं त्रेताग्निभिः सम्भूय, प्रत्येकं चोपदिश्योक्तं द्विरूपोपदेशं निष्कृष्यानुवदन् अन्यदपि तैरुक्तमित्याह श्रुतिः – **ते होचुरित्यादिना** ॥ सोऽहमित्यादिनोक्ता अन्तर्यामिविषयत्वादस्मद्विद्या कं ब्रह्मेत्यादि-

नोक्ता व्याप्तरूपविषयत्वादात्मविद्या अस्माभिरुक्ता । आचार्यस्तु ते गतिं, कर्मणि करणे च व्युत्पादनीयोऽयं शब्दः । प्राप्यं तत्प्राप्त्युपायभूतं मार्गं च वक्ता वदिष्यतीति चोचुरित्यर्थः । आजगामेत्यादि व्यक्तम् ॥ १ ॥

**भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वाऽनुशशासेति को नु माऽनुशिष्याद् भोइतीहावेव निह्नुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निति ॥ २ ॥**

को नु त्वाऽनुशशासेति प्रश्नस्य कथं को नु माऽनुशिष्यादिति मृषोक्तिरित्यतः स्वाभिप्रायं व्यनक्ति– **इहेति** ॥ इह च अव चेति **इहावे** । इहेति भूमिगा मनुष्याः । अवेति पातालस्था असुराः । उभये भगवन्तं निह्नुतः, अपलापं कुरुतः । अत एव न वक्तुं शक्ताः, किन्तु देवा एवेत्याह– **इम इति** ॥ ईदृशाः ज्वालारूपाः अन्यादृशाः करचरणादि-मन्तः । इति हाग्नीनभ्यूदे स्पष्टमुवाच । आचार्यो वक्ति किं नु सोम्येति । हे सोम्य तेऽग्नय किमवोचन् ॥ २ ॥

*( चक्षुरन्तःस्थभगवदुपासनम् )*

**इदमिति ह प्रतिजज्ञ लोकान् वाव किल सोम्य तेऽवोचन्नहं तु ते तद् वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥ ३ ॥ १४ ॥**

**इति** प्रश्नस्योत्तरम् **इदमिति** प्रतीकपूर्वं **प्रतिजज्ञे** प्रतिज्ञातवान् । लोकान् पृथिव्यादिलोकस्थभगवद्रूपाणि । 'तेऽवोचन्' इत्यादि सत्य-कामवाक्यम् । वक्ष्यमाणब्रह्मविद्यायामादरजननायऽदावेव पापासङ्गत्वा-

पादकज्ञानविषयत्वमहिमानमाह– **तद्यथेति** ॥ वक्ष्यमाणनिदर्शनं यथा । **पुष्करपलाशे** पद्मपत्रे । एवं एवं वक्ष्यमाणप्रकारेण भगवज्ज्ञानिनि पापं कर्म न श्लिष्यते न लिप्तं भवति । यज्ज्ञानात् पापाश्लेषरूपमुक्तिर्भवति तद् वस्तु अहं वक्ष्यामीत्याचार्योऽवोचदित्यर्थः । ब्रवीतु भगवानित्युपकोसल उवाच । तस्मै उपकोसलाय उवाच हाऽचार्यः ॥ ३ ॥ खण्डः –१४ ॥

## अथ पञ्चदशः खण्डः

*( चक्षुरन्तःस्थभगवद्विद्या )*

**य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृत-मभयमेतद् ब्रह्मैतस्मिन्न किञ्चन श्लिष्यति तद् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति ॥ १ ॥**

आचार्योक्तविद्यामाह श्रुतिः – **य एष इति** ॥ अन्तरक्षिणि अक्ष्यन्तः, पुरुषः पूर्णषड्गुणतया पुरुषनामा, य एष दृश्यते दिव्यदृष्टि-विषयः सन्नास्ते । एष पुरुष आत्मा आदानादिकर्तृत्वेन वा आदेयम् उपादेयं सुखं मात्यनुभवतीति वा आत्मेत्युक्तः । तस्य गुणानाह– **एतदिति** ॥ विधेयापेक्षया नपुंसकम् । एष आत्मेत्युक्तोऽक्ष्यन्तःस्थः पुरुषः अमृतमभयमेतद् ब्रह्म पूर्णमित्युवाच हेत्यर्थः । तदाह सूत्रे– **'अन्तर उपपत्तेः'**(ब्र.सू. १-२-१३)इति । एतस्मिन् चक्षुःस्थे हरौ । न किञ्चन श्लिष्यति लिप्तं न भवति । तत्र ज्ञापकमाह– **तद्यदिति** ॥ तत् तस्मादसङ्गभगवत्स्थानत्वाद् यत् यदि अस्मिन् चक्षुषि कश्चित् सर्पिर्वा उदकं वा अपिपदादन्यद्वा सिञ्चति तत् वर्त्मनी अधरोत्तरपार्श्वौ प्रत्येव गच्छति न श्लिष्यतीति चोवाचेत्यर्थः ॥ १ ॥

*( चक्षुरन्तःस्थभगवन्नामानि)*

**एतꣳ संयद्वाम इत्याचक्षत एतꣳ हि सर्वाणि वामान्यभिसंयन्ति**

**सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥ २ ॥**

चक्षुषोऽसङ्गत्वापादकस्यासङ्गपुरुषस्य विष्णुत्वे ज्ञापकान्तरमप्याह– **एतमिति ॥** एतं चक्षुःस्थासङ्गपुरुषं संयद्वामः संयन्ति प्राप्नुवन्ति वामानि भद्राणि अस्येति संयद्वाम इत्याचक्षते प्राज्ञाः । कुतः ? हि यस्मादेतं सर्वाणि वामानि भद्राण्यभिसंयन्त्यत इत्यर्थः । ज्ञानिनः फलमाह– **सर्वाणीति ॥** एनं ज्ञानिनं वामानि भद्राण्यभिसंयन्ति प्राप्नुवन्ति ॥ २ ॥

**एष उ एव वामनिरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥**

एष चक्षुरन्तःस्थो हरिः वामनिः । उ खल्वित्यर्थः । कुतः ? हि यस्मादेष चक्षुरन्तःस्थः सर्वाणि वामानि वामं सौन्दर्यं तत्प्रधानत्वात् स्त्रीकदम्बानि नयति प्रेरयत्यत इत्यर्थः । वामनीरेव वामनिः । ह्रस्वश्छान्दसः । ज्ञानिनः फलमाह – **सर्वाणीति ॥** अनेकस्त्रीनियन्ता मुक्ताविह च भवति य एवं वेदेत्यर्थः ॥ ३ ॥

**एष उ एव भामनिरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥**

एष एव भामनिः भामं ओजः तत्प्रधानत्वात् पुरुषजातानि । तानि नयतीति भामनीरेव भामनिः । सर्वपुरुषनेतेत्यर्थः । तस्य गुणान्तरं चाऽह – **एष हीति ॥** अक्षिस्थः, हि प्रसिद्धम् । ज्ञानिनः फलमाह –**सर्वेष्विति॥** तदाह सूत्रे– **'स्थानादिव्यपदेशाच्च'** (ब्र.सू. १-२-१४) इति ॥ ४ ॥

*( अर्चिरादिमार्गः )*

**अथ यदु चैवास्मिंच्छव्यं कर्म कुर्वन्ति यदु च नार्चिषमेवा-**

**भिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासाꣳस्तान् मासेभ्यः संवत्सरꣳ संवत्सरादादित्य- मादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः ॥ ५ ॥**

चाक्षुषपुरुषज्ञानिनो माहात्म्यं प्रकाशयन् तस्य गम्यं मार्गं चाऽह– **अथेति** ॥ अर्थान्तरे । यदु च यद्यप्यस्मिन् चाक्षुषपुरुषस्योक्तरूपस्य ज्ञानिनि मृते शव्यं शवसम्बन्धि दहनाद्युत्तरकर्म कुर्वन्ति, यदु च यदि च न कुर्वन्ति, स ज्ञानी अर्चिषमर्चिर्लोकमेवाभिसंविशन्ति प्राप्नोति । यद्वा, पूर्वमस्मिन्निति ज्ञानिसमुदायाभिप्रायम् । तेऽर्चिषमभिसंविशन्ति प्राप्नुवन्तीति यथाश्रुत एव, न विपरिणामः । अर्चिषः अर्चिलोकात् । अहः अहरभिमानिलोकं संविशन्तीति सर्वत्रानुषज्यते । अह्नोऽहर्लोकादा- पूर्यमाणपक्षं शुक्लपक्षाभिमानिलोकम् , तस्मात् यान् षण्मासान् उदङ् याति सूर्यः उत्तरायणाभिमानिलोकमिति यावत् । तस्माच्च संवत्सरा- भिमानिलोकम्, तस्माच्चाऽदित्यमण्डलं, तस्माच्चन्द्रमण्डलम्, तस्माच्च वैद्युतं विद्युन्नामकवायुपत्नीलोकम् । तत्पुरुषः तस्या विद्युन्नामवाण्या भर्ता । मानवो वायुः । विद्युल्लोकात् तमिति शेषः । अभिसंविशन्तीत्य- नुषङ्गः ॥ ५ ॥

**स एतान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन खलु प्रतिपद्यमाना इमं मानवमावर्तं नाऽवर्तन्ते नाऽवर्तन्ते ॥ ६ ॥ १५ ॥**

स वायुः एनान् चाक्षुषपुरुषज्ञानिनः ब्रह्म गमयति प्रापयति । तदाह सूत्रे– "**श्रुतोपनिषत्कगत्यभिधानात्**"(ब्र.सू. १-२-१६) इति । '**वैद्युतेनैव ततस्तच्छ्रुतेः**'(ब्र.सू. ४-३-६)इति । अत्र प्रतीकालम्ब- नान् कार्यं ब्रह्म चतुर्मुखं नयत्यप्रतीकालम्बनान् परं ब्रह्म नयतीति ब्रह्मपदस्य कार्यब्रह्मपरब्रह्मोभयपरत्वमधिकारिभेदेन ज्ञेयम् । तदाह

सूत्रकारः – **'कार्यं बादरिरस्य गत्युपपत्तेः'**(ब्र.सू.४-३-७) । **'परं जैमिनिर्मुख्यत्वात्'**(ब्र.सू.४-३-१२) **'अप्रतीकालम्बनान्नयति'** (ब्र.सू. ४-३-१४) इत्यादि । अर्चिरादेर्जडत्वभ्रान्तिं निवारयति– एष देवपथो देवैरभिमन्यमानमार्गः, ब्रह्मपथः ब्रह्मप्राप्तिमार्गः । एतेनार्चिरादिना पथा प्रतिपद्यमानाः ब्रह्म प्राप्नुवते । इमं मानवमावर्तं मानवा मनुष्याः यत्राऽवर्तन्ते सोऽयं मानवावर्तः, स एव मानव आवर्तः अलुक्समासः । तं मानवमावर्तं जननमरणादिरूपसंसारं प्रति नाऽवर्तन्ते मुक्ता एव भवन्तीति । **'विकारवर्ति च तथा हि दर्शयति'**(ब्र.सू.४-४-२०) इति सूत्रभाष्यादौ तु मानवमावर्तं संसारं नाऽवर्तन्ते नावर्तयन्तीत्यर्थमुपेत्य मुक्तानां संसारिविषयव्यापारो नेत्यर्थपरतया व्याख्यातम् ॥ ६ ॥

**॥ इति पञ्चदशः खण्डः ॥**

## अथ षोडशः खण्डः

*(याज्ञनामकवायुदेवस्य पादपूजा )*

**एष हवै यज्ञो योऽयं पवत एष यन्निदꣳसर्वं पुनाति यदेष यन्निदꣳ सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी ॥ १ ॥**

पूर्वत्र संवर्गविद्याविषयत्वेनोपक्रान्तो वायुः 'प्राणो ब्रह्म' इत्यपरब्रह्मत्वेन प्रकृतः 'स एनान् ब्रह्म'इत्यव्यवधानेन पूर्वं परामृष्टश्चेति तद्विषयामन्यामपि यज्ञविद्यामाह– **एष हेत्यादिना** ॥ योऽयं पवते वाति एष वायुर्यज्ञो हवै, सर्वयज्ञाभिमानी यज्ञे सन्निहितो यज्ञनामा । कथमित्यतो निर्वक्ति– **एष इति** ॥ एष वायुः यन् गच्छन्नेव सर्वमिदं पुनाति पवित्रयति । यद् यस्मादेष वायुः गच्छन्नेवेदं सर्वं पुनाति, तस्माद्धेतोः एष वायुरेव यज्ञः । ''इण् गतौ'' इत्यस्य शतृप्रत्यये सुबादौ यन्निति रूपम् । 'ज्ञ शुद्धभावे' इति धातोः क्विपि ज्ञ इति रूपम् ।

निरुक्तबलात् पूर्वपदान्त्यलोपे यज्ञ इति सिद्धेरिति भावः । यज्ञाख्यवायोः पादावस्थितिस्थानमाह – **तस्येति** ॥ तस्य वायोः मनश्च वाक् च वर्तनी पादौ । मनोवाचौ वर्तेते द्वौ पादावित्यर्थः ॥ १ ॥

**तयोरन्यतरां मनसा सꣳस्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गाताऽन्यतराꣳस यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यपवदति ॥ २ ॥**

तयोः पादयोरन्यतरां मनःसंस्थां वर्तनिं दक्षिणपादं ब्रह्मर्त्विक् मनसा मौनेन संस्करोति पूजयति, होताऽध्वर्युरुद्गातेति त्रयो ऋत्विजः वाचा उपलक्षणं क्रमाद् [१] वाचा मन्त्रैः, अध्वर्युर्होमादिकर्मणा, सामगानेनोद्गाता चान्यतरां वाचि स्थितां वर्तनिं वामपादं संस्करोतीत्यनुषज्यते । प्रत्येकमन्वयः । ब्रह्मर्त्विजः कदा मौनं तद्भङ्गे च किमनिष्टमित्यतः तद्भङ्गेऽनिष्टोक्त्या मौनकालं नियमयति – **अथेति** ॥ यत्र यदि । प्रातरनुवाके **उपाकृते** उपक्रान्ते । **परिधानीयाः** कर्मसमापिकायाः अन्त्याया ऋचः जपात् पुरा ब्रह्मा व्यपवदति वाचं विसृजति ॥ २ ॥

**अन्यतरामेव वर्तनीꣳ संस्कुर्वन्ति हीयतेऽन्यतरा स यथैकपाद् व्रजन् रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञꣳ रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान् भवति ॥ ३ ॥**

तदा होत्राद्यास्त्रयः ऋत्विजः अन्यतरां वाचि स्थितां वामवर्तनिमेव संस्कुर्वन्ति पूजयन्ति । हीयते अन्यतरा मनःस्थिता दक्षिणवर्तनिः । ततश्च किमित्यत आह – **स यथेति** ॥ एकपात् मनुष्यो व्रजन् गच्छन् रथो वा एकेन चक्रेण वर्तमानस्तिष्ठन् रिष्यति नश्यति एवमस्य यजमानस्य यज्ञो

---

१. अत्र 'होता' इति शेषपूरणं कर्तव्यमिति भाति ।

रिष्यति । रिष्यन्तं यज्ञमनु यजमानो रिष्यति । तद् व्यनक्ति– **स** यजमान **इष्ट्वा पापीयान् भवतीति** ॥ ३ ॥

**अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यपवदत्युभे एव वर्तनी सꣳस्कुर्वन्ति न हीयतेऽन्यतरा ॥ ४ ॥**

**स यथोभयपाद् व्रजन् रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान् भवति ॥ ५ ॥ १६ ॥**

तर्हि मौनस्याभङ्गे किं भवतीत्यत आह– **अथ यत्रेति** ॥ न व्यपवदतीत्यन्वयः । शिष्टं स्पष्टम् ॥ ४ ॥ ५ ॥ **इति षोडशः खण्डः ॥**

## अथ सप्तदशः खण्डः

*( व्याहृतित्रयस्य महिमा )*

**प्रजापतिर्लोकानभ्यतपत् तेषां तप्यमानानाꣳ रसान् प्राबृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः ॥ १ ॥**

ब्रह्मादिऋत्विजां मौनादिनियमभङ्गे प्रसक्तयज्ञपादलोपसन्धायकं व्याहृतिहोमं वक्ष्यन् व्याहृतिमाहात्म्यं क्रमाद् वदन् ताभिर्होमप्रकारं चाऽह– **प्रजापतिरित्यादिना** ॥ प्रजापतिर्भगवान् **लोकानभ्यतपत्** सारत्वेन व्यजानात् । **तेषां** लोकानां **तप्यमानानां** भगवता विज्ञायमानानां सकाशात् सारान् प्राबृहत् निरगमयत् । तद् व्यनक्ति– **अग्निमिति** ॥ पृथिव्या अग्निं प्राबृहदित्यनुषङ्गः । वायुं नासिक्यवायुमन्तरिक्षाद् आदित्यं दिवः ॥ १ ॥

**स एतास्तिस्रो देवता अभ्यतपत् तासां तप्यमानाना९ रसान् प्राबृहदग्नेर्ऋचो वायोर्यजू९षि सामान्यादित्यात् ॥ २ ॥**

प्रजापतिः एतास्तिस्रोऽग्न्यादिदेवताः । **अग्नेरित्यादि** पञ्चमी । ऋचः ऋचामभिमानी ब्रह्मा । वायोः नासिक्यवायुतः यजूंषि यजुषामभिमानी हरः । आदित्यात् सामानि साम्नामभिमानी वायुः ॥ २ ॥

**स एतां त्रयीं विद्यामभ्यतपत् तस्यास्तप्यमानाया रसान् प्राबृहद् भूरित्यृग्भ्यो भुव इति यजुर्भ्यः स्वरिति सामभ्यः ॥ ३ ॥**

ऋग्भ्यः ऋङ्मानिचतुर्मुखाद् भूरिति नामानं वराहं प्राबृहत् सत्त्वेनोदबर्हयत् । यजुर्भ्यः यजुर्मानिरुद्राद् भुव इति नामानं नृसिंहं प्राबृहत् । सामभ्यः साममानिवायुतः स्वरिति नामानं कपिलं प्राबृहत् ॥ ३ ॥

*( ऋत्विजां कर्मभङ्गे व्याहृतिहोमः प्रायश्चित्तम् )*

**तद् यद्यृक्तो रिष्येद् भूः स्वाहेति गार्हपत्ये जुहुयाद् ऋचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टिं९ सन्दधाति ॥ ४ ॥**

तत् तस्माद् व्याहृतीनां सर्वसारत्वाद् यदि ऋक्तः रिष्येद् ऋग्जपमौनादिहान्या वैगुण्यं प्राप्नुयात् तर्हि भूः स्वाहेत्युक्त्वा गार्हपत्ये जुहुयात् । ऋचां तद्रसेन तस्य विवरणं ऋचां वीर्येण । भूरित्यनेन होमे कृत इति शेषः । यज्ञस्य ऋचां सकाशात् प्राप्तां विरिष्टिं भ्रंशं सन्दधाति ॥ ४ ॥

**अथ यदि यजुष्टो रिष्येद् भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद् यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टिं९ सन्दधाति ॥ ५ ॥**

**अथ यदि सामतो रिष्येत् स्वः स्वाहेत्याहवनीये जुहुयात् साम्नामेव**

**तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टिं॰ सन्दधाति ॥ ६ ॥**

अथ यजुष्ट इत्यादिवाक्यद्वयेऽप्येवमर्थो ध्येयः ॥ ५ ॥ ६ ॥

**तद् यथा लवणेन सुवर्ण॰ सन्दध्यात् सुवर्णेन रजत॰ रजतेन त्रपु त्रपुणा सीस॰ सीसेन लोहं लोहेन दारु दारु चर्मणा ॥ ७ ॥**

उक्तमेव विरिष्टिसन्धानमनुभवारूढं करोति– **तद्यथेति** ॥ तन्निदर्शनं यथा । भिन्नसुवर्णानामग्निपाके लवणक्षारेण द्रवीभूयैकीभवनरूपसन्धानदृष्टेरिति भावः । शिष्टं स्पष्टम् ॥ ७ ॥

**एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टिं॰ सन्दधाति भेषजकृतो हवा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति ॥ ८ ॥**

एवमेषां पृथिव्यादिलोकानां आसामग्न्यादिदेवतानामस्यास्त्रय्या विद्याया वीर्येण भूरित्यादिव्याहृतित्रयेण यज्ञस्य विरिष्टिं सन्दधाति । एवं सन्धितो यज्ञः सम्यक् समाप्तयज्ञवत् फलं दद्यात् किम् ? इत्यत आह– **भेषजेति** ॥ यत्र यज्ञे एवं विद्वान् यज्ञपादभङ्गादिपरिहारज्ञानी ब्रह्मा भवति एष यज्ञः भेषजकृतः रोगार्तः पुमान्निपुणचिकित्सककृतौषधेन नीरोग इव भेषजकृतः प्रायश्चित्तरूपव्याहृतिहोमाख्यौषधकृतः ॥ ८ ॥

**एष हवा उदक्प्रवणो यज्ञो यत्रैवंविद् ब्रह्मा भवत्येवंविद॰ हवा एषा ब्रह्माणमनुगाथा यतो यत आवर्तते तत्तद् गच्छति ॥ ९ ॥**

तर्हि फलं न दद्यात् किम् ? इत्यतो दद्यादेवेत्याह– **एष हवा इति** ॥ यत्र यज्ञे एवंविद् ब्रह्मा भवति एषः यज्ञः उदक्प्रवणः ऊर्ध्वप्रवणः । ऊर्ध्वलोकानुसारीत्यर्थः । मौनादिनियमभङ्गाद् भग्नमपि यज्ञं सन्धित्वा यजमानादेः फलप्रदं करोति ब्रह्मेत्यत्र गाथाऽस्तीत्याह– **एवमिति** ॥

एवंविदं भग्नयज्ञसन्धानविदं ब्रह्माणमृत्विजमनु तन्निमित्ता तद्विषयिणी स्तुतिरूपा गाथा । हवै प्रसिद्धाऽस्ति । तामाह – **यतो यत इति** ॥ यजमानो यज्ञस्य दुरिष्ट्या ,यतो यतः पुण्यलोकस्थानादावर्तते तत्तत्स्थानमेवंविदा ब्रह्मर्त्विजा गच्छति ॥ ९ ॥

**मानवो ब्रह्मैवैकर्त्विक् कुरूनश्वाभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वा॑ँश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ॥ १० ॥ १७ ॥**

**॥ इति श्रीमच्छान्दोग्योपनिषदि चतुर्थोऽध्यायः ॥ ४ ॥**

मानवो मौनेन भगवन्तं ध्यायन् ब्रह्मैक एव ऋत्विक् कुरून् यज्ञकर्तॄन् यजमानादीन् सर्वान्, अश्वा– आशु वाति जानाति यज्ञभ्रंशमित्याश्वा, आश्वैव अश्वा शीघ्रं तत्तदीयं दोषं ज्ञात्वाऽभिरक्षति सर्वानित्यर्थः । गाथार्थं स्वयमेव श्रुतिर्व्यनक्ति– **एवंविदिति** ॥ तस्माद् भग्नयज्ञसन्धायकत्वाद् ब्रह्माणम् ऋत्विजं कुर्वीत । नानेवंविदमिति द्विरुक्तिरादरार्था ॥१० ॥

**॥ इति सप्तदशः खण्डः ॥**

इति श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते
चतुर्थोऽध्यायः सम्पूर्णः ॥

## ॥ अथ श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते पञ्चमाध्याये प्रथमः खण्डः ॥

*( इन्द्रियाभिमानिनां मुख्यप्राणाधीनत्वनिरूपणम् )*

**॥ॐ॥ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥**

॥ हरिः ॐ ॥ संवर्गविद्यायामग्र्यादिसर्वभक्षकतया यज्ञविद्यायां सर्वसिद्धिकर्तृत्वेन वायुः प्रकृतः । मुमुक्षोस्तत्प्रसादस्य सर्वथाऽपेक्षितत्वात् तद्विषयां प्राणविद्यामाह– **यो हवा इति** ॥ प्रसिद्धो योऽधिकारी ज्येष्ठं वयसोत्तमं श्रेष्ठं गुणत उत्तमं वेद स मुक्तौ स्वजातीयानां मध्ये ज्येष्ठश्च श्रेष्ठश्च भवति हवै । को वा ज्येष्ठश्च श्रेष्ठश्चेत्यत आह– **प्राणो वा इति** ॥ १ ॥

**यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग् वाव वसिष्ठः ॥ २ ॥**

यो हवै वसिष्ठं वसतामुत्तमं, वाक् वागिन्द्रियमानी वह्निः । वसिष्ठः समीपे वसतामुत्तमः ॥ २ ॥

**यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिंश्च लोकेऽमुष्मिंश्च चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥**

प्रतिष्ठां स्थितिहेत्विन्द्रियदैवतम् । प्रतितिष्ठति यत्र स्थातुमिच्छति तत्र सुखं तिष्ठतीत्यर्थः । चक्षुश्चक्षुर्मानी सूर्यः ॥ ३ ॥

**यो ह वै सम्पदं वेद स ँ हास्मै कामाः सम्पद्यन्ते दैवाश्च मानुषाश्च श्रोत्रं वाव सम्पत् ॥ ४ ॥**

सम्पदं सम्पद्धेत्विन्द्रियमानिनम् । सम्पद्यन्ते दैवाश्च मानुषाश्च कामा

इत्यन्वयः। श्रोत्रं श्रोत्रमानीन्द्रः ॥ ४ ॥

**यो ह वा आयतनं वेदाऽयतनꣳ ह स्वानां भवति मनो ह वा आयतनम् ॥ ५ ॥**

आयतनं गृहप्रासादाद्यायतनहेत्विन्द्रियमानिनं, मनः मनोभिमानी रुद्रः ॥ ५ ॥

**अथ ह प्राणा अहꣳश्रेयसि व्यूदिरेऽहꣳ श्रेयानस्म्यहꣳ श्रेयानस्मीति ॥ ६ ॥**

वायोः संहर्तृत्वोपयुक्तमतिबलिष्ठत्वं मीमांसया साधयति– **अथ हेति** ॥ प्राणाः वागादीन्द्रियमानिनः अहंश्रेयसि अहं श्रेयानहं श्रेयानित्येवं स्वस्वश्रैष्ठ्यविषये व्यूदिरे विवादं कृतवन्तः। अहं-श्रेयसीत्युक्तं व्यनक्ति – **अहमिति** ॥ इति व्यूदिरे इत्यन्वयः ॥ ६ ॥

**ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन् को नः श्रेष्ठ इति तान् होवाच यस्मिन् व उत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥ ७ ॥**

ते एवं विवदमानाः प्राणाः वागाद्यभिमानिनो वह्न्याद्याः पितरं प्रजापतिं ब्रह्माणमेत्य प्राप्य, हे भगवन् ! नोऽस्माकं मध्ये कः श्रेष्ठ इत्यूचुरित्यन्वयः। वो युष्माकं मध्ये यस्मिन्नुत्क्रान्त इदं मदीयं शरीरं पापिष्ठतरमिव हेयमिव शवतुल्यं दृश्येत वः युष्माकं मध्ये स श्रेष्ठ इति तान् प्राणानुवाच ह, ब्रह्मेति योजना ॥ ७ ॥

**सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथाऽकला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक् ॥ ८ ॥**

एवं प्रजापतिनोक्ता देवाः ब्रह्मदेहादुत्क्रान्ताः । तथाऽपि देहो न पापिष्ठ आसीत् मुख्यवायोरुत्क्रान्तौ तथाऽऽसीदित्याह – **स हेति** ॥ वागादयो देवा इति ज्ञेयम् । उच्चक्राम विरिञ्चदेहान्निर्ययौ । प्रोष्य प्रवासं कृत्वा, पर्येत्य आगत्य, मद्दते जीवितुं कथमशकत शक्ता अभवन् भवन्त इति देहस्थानन्यान् देवानुवाचेति योजना ॥ ८ ॥

**चक्षुर्होच्चक्राम तत् संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ॥ ९ ॥**

**श्रोत्रꣳ होच्चक्राम तत् संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् ॥ १० ॥**

एवमग्रेऽपि । एवमुक्तास्ते वाचं प्रत्यूचुः – **यथेत्यादि** ॥ अकलाः मूकाः । प्राणेन घ्राणेन प्राणन्तः श्वसन्तः । एवमजीविष्मेत्यूचुरित्यर्थः । एवमग्रेऽपि ज्ञेयम् ॥ ९ ॥ १० ॥

**मनो होच्चक्राम तत् संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥ ११ ॥**

अमनसः प्राणेतरमनोभिमान्यनधिष्ठितमनस्काः ॥ ११ ॥

**अथ ह प्राण उच्चिक्रमिषन् स यथा सुहयः पड्वीशशङ्कून्**

**सङ्क्विदेदेवमितरान् प्राणान् समखिदत् तꣳ हाभिसमेत्योचु-र्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ॥ १२ ॥**

पड्वीशशङ्कून् हयबन्धनरज्ज्वाश्रयाणीन् समखिदत् उद्ववर्ह । तं प्राणं सर्वे वागादयो देवाः अभिसमेत्य हे भगवन् ! एधि भव, आस्स्वेति यावत् । मोत्क्रमीः, नो अस्माकं मध्ये त्वं श्रेष्ठोऽसीत्यूचुः ॥ १२ ॥

**अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसीति ॥ १३ ॥**

**अथ हैनꣳ श्रोत्रमुवाच यदहꣳ सम्पदस्मि त्वं तत् सम्पदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति ॥ १४ ॥**

श्रेष्ठोऽसीत्युक्तं गुणत आधिक्यं विविच्याऽह– **अथ हैनमिति ॥** वसिष्ठत्वादयो वागादीनां ये गुणाः ते सर्वे प्राणे मुख्याः । वागादिष्वस्मासु त्वौपचारिकास्त्वदधीना इति वागादयः प्राणं विज्ञापितवन्त इति वागुवाचेत्यादिवाक्यचतुष्टयस्यार्थः । अहं वसिष्ठाऽस्मीति यत् तद्वसिष्ठ-स्त्वमसीत्यादियोजना ॥ १३ ॥ १४ ॥

**न वै वाचो न चक्षूꣳषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणा इत्येवाऽचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ॥ १५ ॥ १ ॥**

वसिष्ठत्वादिकं प्राणाधीनमित्यत्र ज्ञापकमाह – **न वै वाच इत्या-दिना ॥** वागादीन्द्रियाभिमानिनो न वागादयोऽभवन् । स्वातन्त्र्येण स्वव्यापारदक्षा न भवन्तीत्याचक्षते प्राज्ञाः । तर्हि किमधीनाः सन्तः स्वस्वव्यापारदक्षा इत्यत आह – **प्राणा इति ॥** वागादीन्द्रियजातं प्राणा इत्येवाऽचक्षते । कुतः ? हि यस्मात् सर्वाणि एतानि वागादीनि प्राण एव भवति, प्राणोऽधिष्ठाता तेषामत इति ॥ १५ ॥**इति प्रथमः खण्डः ॥**

## अथ द्वितीयः खण्डः

*( अस्माभिरद्यमानं सर्वं मुख्यप्राणस्यान्नसमर्पणमेव )*

**स होवाच किं मेऽन्नं भविष्यतीति यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्य इति होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किञ्चनानन्नं भवतीति ॥ १ ॥**

त्वं नः श्रेष्ठोऽसीत्युक्त्या श्रेष्ठश्चेदहं तर्हि ममान्नं सर्वैः कल्प्यतामित्याह- **स हेति** ॥ स प्राणः किमन्नं मे भविष्यतीत्युवाच । श्वपक्षिपर्यन्तं प्राणिजातं यत्किञ्चिदिदं योग्यमन्नमत्ति तत्तेऽन्नमित्यूचुरित्यर्थः । प्राणैरग्न्यादिभिर्दत्तमन्नं पूर्वमपि तदीयमेवेत्याह – तद्वा[१] एतत् सर्वप्राणिभिरद्यमानम् अनस्य प्राणस्यान्नं वै कुतः ? इत्यतस्तस्य सर्वेन्द्रियाधिष्ठातृत्वादित्याह – **अनो ह वै नाम प्रत्यक्षमिति** ॥ अक्षेषु इन्द्रियेषु प्रति प्रतिस्थितः । शब्दस्वाभाव्यान्नपुंसकता । फलमाह – **न ह वा इति** ॥ एवंविदि सर्वं प्राणस्यान्नमिति ज्ञानिनि किञ्चनानन्नं न भवति ह्वै । सर्वमस्यान्नं भवतीत्यर्थः ॥ १ ॥

*( भोजनपूर्वोत्तरयोरापोशनं प्राणदेवस्य वस्त्रसमर्पणम् )*

**स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति ॥ २ ॥**

किं मे वासो वसनं भविष्यतीति स प्राणः पुनरुवाच । **आपः** प्राणिभिः पीयमाना आपस्ते वास इति प्राणा ऊचुरित्यर्थः । तत्र वृद्धाचारं प्रमाण-

---

१. अत्र 'तद्वेति' इति प्रतीको धर्तव्य इति भाति ।

यति – **तस्मादिति** ॥ प्राणस्यान्नमानिनो वस्त्ररूपत्वादेवैतदन्नम् अशिष्यन्तो भोक्ष्यमाणाः पुरस्तादुपरिष्टाच्चाद्भिः परिदधति आच्छादयन्ति पूर्वोत्तरापोऽशनं कुर्वन्ति । वासो वसनं लम्भुको लब्धा भवति । अनग्नो भवति प्राण इति बुद्ध्याऽद्भिः परिदधतीत्यर्थः । यद्वा, प्राणस्य वस्त्रबुद्ध्या भोजनोभयतोऽपः पिबन् इहामुत्र च वासो लम्भुको भवत्यनग्नो भवतीति ज्ञानपूर्वकमनुतिष्ठतः फलवाक्यमिदम् ॥ २ ॥

*( प्राणतत्त्वज्ञानस्य मोक्षसाधनत्वनिरूपणम् )*

**तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैय्याघ्रपद्यायोक्त्वोवाच यद्यप्येतच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ३ ॥**

इयं प्राणविद्यापरम्परा गता चेत्याह – **तद्धैतदिति** ॥ तदेतत् तामेतां प्राणविद्यां सत्यकामो जाबालो नाम्ना गोश्रुतये वैयाघ्रपद्याय व्याघ्रपात्पुत्रायोक्त्वा फलं चोवाच तत्फलमाह – **यद्यपीति** ॥ प्राणविद्यायां योग्यो यदि कर्मवशात् स्थाणुतां प्राप्याऽस्ते तादृशाय शुष्काय स्थाणवेऽपि यदि एतद् एतां प्राणविद्यां ब्रूयाद् अस्मिन् स्थाणौ शाखाः जायेरन् । पलाशानि पर्णानि प्ररोहेयुरित्युवाचेत्यन्वयः ॥ ३ ॥

*( मन्थहोमेन महत्त्वप्राप्तिकथनम् )*

**अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥ ४ ॥**

प्राणोपास्त्यङ्गभूतं महत्त्वप्रापकं होमं द्रव्यमन्त्रहोमप्रकारादिपूर्वमाह – **अथ यदीत्यादिना** ॥ महत् महत्त्वं जिगमिषेत् प्राप्तुमिच्छेत् । सर्वौषधस्य

सर्वधान्यस्य मन्थं वितुषीकरणेनाऽलोडितं पिष्टं दधिमधुनोः दधिमधुभ्याम् उपमथ्य सम्पिष्य, आज्यस्य हुत्वा आज्याहुतिं ज्येष्ठाय श्रेष्ठाय स्वाहेति कृत्वा, आज्यस्य सम्पातं सम्पातनं धारां मन्थे अवनयेत् ॥ ४ ॥

**वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् सम्पदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥ ५ ॥**

एवं वसिष्ठायेत्यादिवाक्यचतुष्टयस्याप्यर्थो ध्येयः ॥ ५ ॥

**अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपत्यमो नामास्यमा हि ते सर्वमिदꣳ स हि ज्येष्ठः श्रेष्ठो राजाऽधिपतिः स मा ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ राज्यमाधिपत्यं गमयत्वहमेवेदꣳ सर्वमसानीति ॥ ६ ॥**

अथेत्यर्थान्तरे । मन्थं प्रतिसृप्य प्राप्याञ्जलौ निधाय जपति जपेत् । मन्त्रमाह – **अमोनामेति** ॥ मन्थमानिनं प्राणं प्रत्युच्यते । हे अम अमित त्वं अमोनामाऽसि अमितोऽसि । कुतः ? हि यतः इदं सर्वं ते तव त्वत्स्वामिकम् । अतः स हि मन्थदेवः प्राणो ज्येष्ठः श्रेष्ठो राजा अधिपतिः । स मन्थदेवः मा मां समानेभ्यः ज्येष्ठ्यं श्रैष्ठ्यं राज्यम् आधिपत्यं च गमयतु । अहमेवेदं सर्वं स्वयोग्यपूर्णः असानि भवानीति जपतीत्यन्वयः ॥ ६ ॥

**अथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचामति श्रेष्ठꣳ सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं पिबति ॥ ७ ॥**

एवं मन्थं जप्त्वा मन्त्रपूर्वं तद्भक्षणमाह– **अथेति** ॥ अनन्तरम् एतया

ऋचा आचामति, 'चमु अदने' अत्तीत्यर्थः। 'तत्सवितुः' इति मन्त्रेण, पच्छः पादशः। त्रिरवदाय भक्षयित्वा चरमपादेन सर्वं भक्षयेदित्याह – **तत्सवितुरिति** ॥ तत्सवितुः जगत्प्रसवितुः देवस्य विष्णोः सकाशाद् वयं भोजनं रक्षां सर्वभोगांश्च वृणीमहे प्राप्नुवाम। भगस्य समग्रैश्वर्यादि-सर्वगुणस्वरूपस्य विष्णोः भृत्यरूपं तुरं वायुं सर्वधातुषूत्तमं च धीमहि ध्यायेमेति मन्त्रार्थः ॥ ७ ॥

**निर्णिज्य क॰ऽसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् ॥ ८ ॥**

कंसं चमसं वा मन्थपात्रं निर्णिज्य प्रक्षाल्याग्नेः पश्चात् संविशति स्वपेत्। चर्मणि कृष्णाजिने व्याघ्रचर्मणि वा स्थण्डिले वा केवलायां वा भुवि वाचंयमो मौनी, अप्रसाहः स्त्रीरहितः, संविशतीति पूर्वेणान्वयः। स यदि स्वप्ने स्त्रियं सुमङ्गलीं पश्येत् समृद्धं सफलं कर्मेति विद्यात् ॥ ८ ॥

**तदेष श्लोकः –**

**यदा कर्मसु काम्येषु स्त्रिय॰ स्वप्नेऽभिपश्यति ।**
**समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने तस्मिन् स्वप्ननिदर्शन इति ॥ ९ ॥ २ ॥**

स्त्रीदर्शनं कर्मसमृद्धिज्ञापकमित्यत्र श्लोकं प्रमाणयति– **तदेष इति** ॥ तत् तत्र उक्तेऽर्थे काम्येषु कर्मसु क्रियमाणेषु यदा यदि तत्र तर्हि स्वप्ननिदर्शने स्वप्नाख्यदृष्टान्ते जाते सति समृद्धिं जानीयादित्यर्थः। तदाह सूत्रे **'सूचकश्च हि श्रुतेराचक्षते च तद्विदः'** (ब्र. सू. ३-२-४) इति ॥ ९ ॥

॥ इति द्वितीयः खण्डः ॥

## अथ तृतीयः खण्डः

*( देवयानपितृयाणमार्गनिरूपणम् )*

**श्वेतकेतुर्हाऽरुणेयः पञ्चालानाꣳ समितिमेयाय तꣳ ह प्रवाहणो जैबलिरुवाच कुमारानु त्वाऽशिषत् पितेत्यनु हि भगव इति ॥ १ ॥**

यो हवै ज्येष्ठमित्यादिना स्वसमानाधिक्यापादकविद्योक्ता । सर्वपापालेपपुण्यलोकापादकपञ्चाग्निविद्यां सोपोद्धातमाख्यायिकयाऽष्टभिः पर्वभिराह– **श्वेतकेतुरित्यादिकया** ॥ श्वेतकेतुर्नामतः, अरुणेरपत्यमारुणेयः पञ्चालानां पञ्चालदेशीयजनानां समितिं सभामेयाय प्राप्तवान् । तं ह श्वेतकेतुं प्रवाहणो नाम राजा जिबिलस्यापत्यं जैबिलिरुवाच हे कुमारा ३ इति सम्बोध्य ते पिता त्वा त्वाम् अनुशिषद् अन्वशिषद् विद्यामुपदिष्टवान् किमित्युवाचेत्यर्थः । कुमार आह – हे भगवः! अनुशिषदित्यनुकर्षः । अनुशिष्टोऽस्मि पित्रेत्युवाचेत्यर्थः ॥ १ ॥

**वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति वेत्थ यथा पुनरावर्तन्ता ३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना ३ इति न भगव इति ॥ २ ॥**

इति तेनोक्तो राजा पप्रच्छेत्याह श्रुतिः – **वेत्थेति** ॥ यद् अधि अधिकृत्य इतो लोकात् प्रयन्ति गच्छन्ति तद् वेत्थ जानासि किमिति पप्रच्छ राजेति योज्यम् । कुमार आह – नेति न वेद्मि भगवः, इति कुमार उवाच । एवमग्रेऽपि प्रश्नप्रत्युत्तरे ज्ञेये । व्यावर्तना व्यावर्तनानि मध्ये प्राप्यस्थानानि । यथा येन प्रकारेण वर्तते तं प्रकारं वेत्थ किमित्यर्थः ॥ २ ॥

**वेत्थ यथाऽसौ लोको न सम्पूर्यता ३ इति न भगव इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगव इति ॥ ३ ॥**

असौ लोकः परलोकः। इतो गतैर्न सम्पूर्यते तद् वेत्थ किमिति ? सर्वत्र प्लुतिः प्रश्नद्योतिका। पञ्चम्यामाहुतौ आहूयते स्थाप्यते अत्रेत्याहुतिः प्रक्षेपस्थानम्, तस्याम्। हुता इति शेषः। यत्र पञ्चमस्थाने प्रक्षिप्ता आपः अबादिपञ्चमहाभूतोपलक्षिता जीवाः पुरुषवचसः पुमांस इति स्त्रिय इति शब्दभाजो भवन्ति तद् वेत्थ किमित्यर्थः ॥ ३ ॥

**अथ नु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् कथꣳ सोऽनुशिष्टो ब्रुवीतेति स हाऽयस्तः पितुरर्धमेयाय तꣳ होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति ॥ ४ ॥**

राजा वक्ति– **अथेति**। अथ नु एवं तर्हि किमर्थमनुशिष्टोऽस्मीत्यवोचथाः उक्तवानभूः। यो हीमानि मया पृष्टानि प्रमेयाणि न विद्यात् स कथमनुशिष्टोऽस्मीति ब्रवीत ब्रूयादिति राजोवाचेत्यर्थः। स श्वेतकेतुः आयस्तः सखेदः पितुरर्धं स्थानमेयाय जगाम। तं पितरमुवाच। हे भगवन् मा माम् अननुशिष्य अनुपदिश्यैव किल त्वा त्वाम् अनुशिषम् अन्वशिषमित्यब्रवीत् भगवान् ॥ ४ ॥

**पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् तेषां नैकं च नाशकं विवक्तुमिति स होवाच यथा मा त्वं ततैतानवदो यथाऽहमेषां नैकं च न वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥ ५ ॥**

राजन्यबन्धुः राजाधमः मा मां पञ्च प्रश्नानप्राक्षीत् प्रष्टव्यार्थान् पृष्टवान्। तेषां मध्ये एकञ्चन विवक्तुं विविच्य वक्तुं नाशकं शक्तो नाभूवं, तान् मे ब्रूहि इत्युवाचेत्यपि ज्ञेयम्। क्रोधाद् राजन्यबन्धुरित्युक्तिः। स पुत्रेणैवमुक्तः पिता, हे तत ! तात ! त्वम् एतान् प्रश्नान् यथा यथावद् वक्तुं मा मामवदः। एषां मध्ये अहं यथा यथावत् किञ्चन किमपि न वेद न जानामि। यद्यहमिमान् प्रश्नार्थानवेदिष्यं ज्ञातवानभविष्यं कथं ते

नावक्ष्यमित्युवाच पिता ॥ ५ ॥

**स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्राप्तायार्हाञ्चकार स ह प्रातः सभाग उदेयाय त१ होवाच मानुषस्य भगवन् गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन् मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति स ह कृच्छ्री बभूव ॥ ६ ॥**

स गौतमो राज्ञोऽर्द्धं स्थानमेयाय गतवान्। प्राप्ताय तस्मै गौतमायार्हां पूजां चकार राजा। स कृतार्हणो गौतमः उषित्वा, परेद्युः प्रातःकाले सभागः सभागधेयः सोपायनः उदेयाय राजानमुपागतवान्। राजा दैववित्तलिप्सयाऽयमागतवानिति तन्मनोगतं ज्ञात्वा तं गौतमं हे भगवन्! गौतम! मानुषस्य वित्तस्य हस्त्यश्वगोहिरण्यादेर्वित्तस्य वरं प्राप्तिं वृणीथाः भजस्वेत्युवाच। स एवमुक्तो गौतमः, हे राजन्! मानुषं वित्तं तवैवास्तु, कुमारस्यान्ते समीपे यामेव वाचमभाषथाः तामेव मे मह्यं ब्रूहीत्युवाच ह ॥ ६ ॥

**त१ह चिरं वसेत्याज्ञापयाञ्चकार त१ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तु पुरा विद्या ब्राह्मणान् गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ ७ ॥ ३ ॥**

स एवमुक्तो राजा तत्पृष्टस्य गोप्यत्वात् कृच्छ्री क्लेशयुक्तो बभूव। नासंवत्सरवासिने प्रब्रूयादिति शास्त्रमनुसरन् राजा तं गौतमं चिरं वसेत्याज्ञापयाञ्चकार। तं गौतममुवाच – हे गौतम! त्वं मा मां यां विद्यां यथा यथावद् वक्तुमवदः, इयं तु विद्या त्वत् त्वत्तः प्राग् ब्राह्मणान् यथा यथावत्, न गच्छति पुरा नागच्छत्, इयं पञ्चाग्निविद्या ब्राह्मणेषु नाऽसीत्। तस्मादेव कारणात् सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनं राज्यरक्षादिरूपमभू-

दित्युक्त्वा राजा तस्मै गौतमाय विद्यामुवाचेत्यर्थः ॥ ७ ॥ खण्डः ३ ॥

## अथ चतुर्थः खण्डः

*( पञ्चाग्निविद्या )*

**असौ वाव लोको गौतमाग्निस्तस्याऽदित्य एव समिद् रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विष्फुलिङ्गाः ॥ १ ॥**

पञ्चप्रश्नविषयानर्थान् व्युत्क्रमेण सप्तभिः खण्डैरुपदिदिक्षुरादौ चरमप्रश्नविषयपञ्चाग्निविद्यां वेत्थ पञ्चम्यामाहुतावाप इत्येतदुत्तरस्य प्रथमादिसापेक्षत्वात् तदुक्तिपूर्वमाह – **असौ वावेत्यादिपञ्चभिः खण्डैः।** असौ लोकः द्युलोकस्थः असुस्थत्वात् प्रकाशरूपत्वाच्चासौ लोक इत्युक्तो नारायणः अग्निः – अत्तीति वा अङ्गनेतृत्वाद्वा अग्निनामा । तस्य द्युलोकस्थस्य नारायणस्य आदित्यः, आदत्त इत्यादित्यनामाऽऽदित्यस्थो नारायणनारायणात्मा समित्, समेधनात् समिदित्युच्यते । रतिशंरूपत्वेन रश्मिनामा रश्मिगतो नारायणवासुदेवात्मा धूत्करोति निराकरोत्यज्ञानादीनीति धूमनामोच्यते । बहुरूपत्वाद् बहुवचनम् । एवमग्रेऽपि । तमसा अहननीयत्वादहर्नामाऽहर्गतो नारायणसङ्कर्षणात्मा । अर्चिः अरंचितत्वेन अर्चिरित्युच्यते । सुखरूपत्वाच्चन्द्रमोनामा चन्द्रगतः नारायणप्रद्युम्नात्मा । अङ्गाराः अङ्गेषु रमणहेतुनाऽङ्गारा इत्युक्तः । अनन्यराजत्वेन नक्षत्रनामा नक्षत्रगतः । नारायणानिरुद्धात्मा मत्स्यादिरूपेण विविधं स्फुरणाद् विस्फुलिङ्गा इत्युक्तः ॥ १ ॥

**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ॥ २ ॥ ४ ॥**

तस्मिन् द्युलोकस्थे नारायणे एतस्मिन्नारायणाद्यात्मना प्रत्येकं पञ्चधा स्थिते अग्नौ अग्निनामके जीवाख्यहवीरूपहोमाधारतयाऽग्निस्थानीये देवाः

श्रद्धां श्रद्धापूर्वं यज्ञादिकर्तारं श्रद्धोपलक्षिताबादिपञ्चभूतयुक्तं जीवमित्यर्थः । उपसंहारे इति तु पञ्चम्यामाहुतावाप इत्यप्शब्देन भूतानामुक्तेः । तदाह सूत्रे **'प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः'** (ब्र.सू. ३-२-५) इति । जुह्वति प्रक्षिपन्ति । तस्या आहुतेः तस्मात् होमाधारस्थनारायणाद् द्युलोकाग्नितः । सोमो राजा सम्भवति सोमराजानं प्रापयन्ति देवा इत्यर्थः ॥ २ ॥ खण्डः ४ ॥

**अथ पञ्चमः खण्डः**

**पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विष्फुलिङ्गाः ॥ १ ॥**

पर्जन्यः परमस्य जन्यमस्तीति पर्जन्यनामा मेघचक्रगतो वासुदेवः। अग्निः प्रागुक्तनिरुक्त्याऽग्निनामाऽग्निस्थानीयः, तस्य पर्जन्यस्थस्य वासुदेवस्य । वायुः ज्ञानरूपत्वायूरूपत्वाभ्यां वायुनामा वायुगतो वासुदेवनारायणात्मा समित् प्रागुक्तनिरुक्त्या समिदित्युच्यते । अपां भरणादभ्रनामाऽभ्रगतो वासुदेववासुदेवात्मा धूमः । विद्योतनाद् विद्युन्नामा विद्युद्गतो वासुदेवसङ्कर्षणात्माऽर्चिः । अशनादशनिनामाऽशनिगतो वासुदेवप्रद्युम्नात्मा अङ्गाराः । निर्ह्रादनाद् ह्रादुनिनामा ह्रादुनिशब्दितमेघनादगतो वासुदेवानिरुद्धात्मा विस्फुलिङ्गाः ॥ १ ॥

**तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुतेर्वर्षः सम्भवति ॥ २ ॥ ५॥**

तस्मिन्नेतस्मिन्नग्नौ नारायणाद्यात्मना वाय्वादौ पञ्चधा स्थिते पर्जन्यगते वासुदेवे । सोमं राजानं सोमराजं प्राप्तं श्रद्धापदेनोक्तं जीवं तस्या आहुतेः पर्जन्याख्यस्थानाद् वर्षः वृष्टिस्थं कुर्वन्ति देवा इत्यर्थः ॥ २ ॥ खण्डः ५ ॥

## अथ षष्ठः खण्डः

**पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विष्फुलिङ्गाः ॥ १ ॥**

पृथिवी प्रथितत्वात् पृथिवीस्थः सङ्कर्षणः अग्निः । तस्याः पृथिवीस्थसङ्कर्षणस्य संवत्सरो वासयतीति संवत्सरनामा संवत्सरगतः सङ्कर्षणनारायणात्मा समित् । सम्यक् प्रकाशनाद् आकाशनामा आकाशगतः सङ्कर्षणवासुदेवात्मा धूमः । रतिदानाद् रात्रिनामा रात्रिस्थः सङ्कर्षणसङ्कर्षणात्माऽर्चिः । दिशतीति दिङ्नामा दिक्षु स्थितः सङ्कर्षणप्रद्युम्नात्मा अङ्गाराः । अवान्तरं दिशतीत्यवान्तरदिङ्नामाऽवान्तरदिक्षु स्थितः सङ्कर्षणानिरुद्धात्मा विस्फुलिङ्गाः ॥ १ ॥

**तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नꣳ सम्भवति ॥ २ ॥ ६ ॥**

तस्मिन्नेतस्मिन् संवत्सरादौ नारायणाद्यात्मना पञ्चधा स्थिते पृथिवीस्थे सङ्कर्षणे वर्षं वृष्टौ स्थापितं जीवम् । तस्या आहुतेः पृथिवीस्थानादन्नं अद्यमानवस्तु सम्भवति, तत्र स्थापयन्तीत्यर्थः ॥ २ ॥ खण्डः ६ ॥

## अथ सप्तमः खण्डः

**पुरुषो वाव गौतमाग्निस्तस्य वागेव समित् प्राणो धूमो जिह्वाऽर्चिश्चक्षुरङ्गाराः श्रोत्रं विष्फुलिङ्गाः ॥ १ ॥**

पुरुषः पुरुत्वात् पूर्णत्वात् पुरुषनामा पुरुषगतः प्रद्युम्नः अग्निः । तस्य पुङ्गतस्य प्रद्युम्नस्य वक्तृत्वाद् वाङ्नामा वाचि स्थितः प्रद्युम्ननारायणात्मा समित् । प्राणनात् प्राणनामा प्राणस्थः प्रद्युम्नवासुदेवात्मा धूमः । जिह्वा

हूयते अद्यतेऽनेनेति जिह्वानामा जिह्वागतः प्रद्युम्नसङ्कर्षणात्मा अर्चिः । चष्टे पश्यति सर्वमिति चक्षुर्नामा चक्षुःस्थः प्रद्युम्नप्रद्युम्नात्मा अङ्गाराः । श्रवणात् श्रोत्रनामा श्रोत्रगतः प्रद्युम्नानिरुद्धः विस्फुलिङ्गाः ॥ १ ॥

**तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति ॥ २ ॥ ७ ॥**

तस्मिन्नेतस्मिन्नारायणादिरूपेण पञ्चात्मना वागादौ स्थिते प्रद्युम्नाख्ये पुरुषगतेऽग्नौ अन्नमद्यमानवस्तुगतं जीवम् । तस्या आहुतेः पुरुषरूप-स्थानाद् रेतो रेतस्थं कुर्वन्तीत्यर्थः ॥ २ ॥ **इति सप्तमः खण्डः ॥**

**अथ अष्टमः खण्डः**

**योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद् यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विष्फुलिङ्गाः ॥ १ ॥**

योषा सर्वैर्जोष्यत्वाद् योषानामा योषिद्गतोऽनिरुद्धः अग्निः । तस्याः योषिद्गतानिरुद्धाख्याग्नेः उपस्थः उपस्थितेः उपस्थनामोपस्थगतः अनिरुद्धनारायणात्मा समित् । उपमन्त्रयते रत्यर्थं सम्भाषत इति यत् सः तत्र योऽनिरुद्धवासुदेवात्मोपमन्त्रणनामा धूमः । युनक्ति मिश्रीकरोतीति योनिनामा योनिस्थोऽनिरुद्धसङ्कर्षणात्मा अर्चिः । अन्तः योन्यन्तः करोतीति यत् ते अन्तःकरणकर्ताअन्तःकरणरूपक्रियागतोऽनिरुद्ध-प्रद्युम्नात्मा अङ्गाराः । रूपबाहुल्याद् बहुवचनमित्यवोचाम प्राक् । अभिनन्दाः अभिनन्दतीत्यभिनन्दनामाऽभिनदगतोऽनिरुद्धानिरुद्धात्मा विस्फुलिङ्गाः ॥ १ ॥

**तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति ॥ २ ॥ ८ ॥**

तस्मिन्नेतस्मिन्नारायणाद्यात्मनोपस्थादौ पञ्चधा स्थिते योषिद्गतेऽनिरुद्धाख्याग्नौ रेतोगतं जीवं तत्त्वाभिमानिनो देवाः जुह्वति प्रतिक्षिपन्ति, योनिद्वारेति योज्यम्। तस्या आहुतेः योषिद्रूपहोमस्थानाद् गर्भः सम्भवति शरीरवान् भवति। तदाह सूत्रे **'योनेः शरीरम्'** इति (ब्र.सू. ३-२-२८)
॥ २ ॥ **इति अष्टमः खण्डः ॥**

**अथ नवमः खण्डः**

**इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा मासानन्तः शयित्वा यावद्वाऽथ जायते ॥ १ ॥**

'वेत्थ पञ्चम्याम्' इति स्वकृतप्रश्नस्यापेक्षताग्निचतुष्टयपूर्वं योषिदाख्यपञ्चममग्निमुक्त्वाऽधुनोत्तरमाह– **इति त्विति** ॥ प्रागिवार्थो ध्येयः । इतिशब्दश्चरमप्रश्नोत्तरसमाप्तौ । अत्र **'वेत्थ यथा पञ्चम्यामाहुतावापः'**इति प्रश्नवाक्ये **'इति तु पञ्चम्यामाहुतावापः'** इति प्रतिवचनवाक्ये चापूशब्दः पञ्चमहाभूतोपश्लिष्टजीवपरः । तदाह सूत्रेषु **'तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्'** (ब्र.सू. ३-१-१), **'त्र्यात्मकत्वात्तु भूयस्त्वात्'** (ब्र.सू. ३-१-२) इत्यादिषु। एवं चरमप्रश्नं परिहृत्यावशिष्टप्रश्नचतुष्टयं परिजिहीर्षु-स्तदुपयुक्तमाह– स गर्भ उल्बावृतः जरायुणा वेष्टितः दशमासान् वा यावद्वा कालं स्थातव्यं, तावत्कालं वा अन्तः योषिदन्तः शयित्वा अथानन्तरं जायते ॥ १ ॥

**स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ॥ २ ॥ ९ ॥**

स जातः यावदायुषं जीवति। तं प्रेतं मृतं दिष्टं कर्मिणं यत एव द्युलोकाख्याग्नितः इतः इमं लोकं प्राप्तः यतः योषिदाख्याग्नितः सम्भूतः जातो

भवति, तादृशब्रह्ध्याद्यग्नये इतो लोकाद्धरन्ति नयन्तीति ॥ २॥ खण्डः ९ ॥

## अथ दशमः खण्डः

*( ज्ञानिनां देवयानेन ब्रह्मप्राप्तिः )*

**तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ् एति मासा॒ँस्तान् ॥ १ ॥**

केन मार्गेण हरन्तीति शङ्कां परिहरन् वेत्थ यथा देवयानस्येति तृतीयप्रश्नोत्तरेणैवाऽद्यद्वितीयप्रश्नपरिहारः सिद्ध्यतीति भावेन तस्योत्तरमाह – **तद्य इति ॥** येऽधिकारिणः इत्थमुक्तप्रकारेण तत् पञ्चाग्निस्वरूपं विदुः, ये चामी अरण्ये श्रद्धा तपः, इतिशब्दः प्रभृत्यर्थः, श्रद्धापूर्वकं तपःप्रभृत्यनुतिष्ठन्ति निवृत्तकर्मानुष्ठानपूर्वं भगवद्ध्यानादिकं कुर्वन्ति, ते ज्ञानिनोऽर्चिषमर्चिर्लोकमभिसम्भवन्ति प्राप्नुवन्ति । तदाह सूत्रे – **'अर्चिरादिना तत्प्रथितेः'** (ब्र.सू. ४-३-१४) इति । 'अर्चिषः' इत्यादि पञ्चमी । अहः अहरभिमानिलोकम् । आपूर्यमाणपक्षं पूर्वपक्षमानिलोकम् । सम्भवन्तीति क्रियापदं सर्वत्र योज्यम् । उदङ् उत्तरतः यान् मासानादित्य एति । उत्तरायणमानिलोकम् ॥ १ ॥

**मासेभ्यः संवत्सर॒ँ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्था इति ॥ २ ॥**

संवत्सरं संवत्सरमानिलोकं विद्युतं विद्युन्मानिलोकम् । तत्पुरुषः तस्या विद्युतो भारत्याः पुरुषः पतिः मानवो वायुः । स एनान् अर्चिरादिना विद्युल्लोकपर्यन्तमागतान् ब्रह्म गमयति । अस्य वाक्यस्योपकोसल-

प्रकरणगतवाक्य इवार्थो ध्येयः। इत्येव देवयानः पन्था इति ॥ २ ॥

*( काम्यकर्मिणां पितृयाणेन स्वर्गप्राप्तिः )*

**अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद् रात्रिꣳ रात्रेरपरपक्षमपरपक्षाद् यान् षड् दक्षिणैति मासाꣳस्तान्नैते संवत्सरमभिप्राप्नुवन्ति ॥ ३ ॥**

अथ य इमे ग्रामे स्थिताः सन्त इष्टं यजनं पूर्तं तटाकादि दत्तं दानं, इति शब्दः आद्यर्थः। उपासते ग्रामे स्थित्वा प्रवृत्तकर्मिणो ये ते धूममभिसम्भवन्ति धूमाभिमानिलोकं प्राप्नुवन्ति। सम्भवन्तीति सर्वत्र योज्यम्। रात्रिं रात्रिमानिलोकम् अपरपक्षं कृष्णपक्षमानिलोकं यान् षण्मासानादित्यो दक्षिणा दक्षिणां दिशमेति तान् मासानेति दक्षिणायनमानिलोकं प्राप्नुवन्तीत्यर्थः। एकवचनं बहुवचनार्थे। ते धूममित्युपक्रमात् ॥ ३ ॥

**मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद् देवानामन्नं तं देवा भक्षयन्ति ॥ ४ ॥**

मासेभ्यः संवत्सरं संवत्सरात् पितृलोकमिति योज्यम्। आकाशं विनायकलोकम्। एष सोमो राजा चन्द्रः देवानां तत् प्रसिद्धममृताख्यमन्नम्। तदन्नं देवाः भक्षयन्ति ॥ ४ ॥

**तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद् वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥**

चन्द्रं प्राप्तास्ते काम्यकर्मिणः तस्मिन् चन्द्रे यावत्सम्पातं यावत्पतनमुषित्वा अथानन्तरं एतमेवाध्वानं पुनरावर्तन्ते। एतमित्युक्तमार्गः क इत्यत आह– **यथेतमिति**॥ यथा येन मार्गेण द्युलोकं प्रति इतं

गतम् एतमेवाध्वानमित्यर्थः । कियत्पर्यन्तं गतमार्गेणाऽगमनमित्यत-श्चन्द्रादाकाशपर्यन्तं यथेतं तदनन्तरमन्यथेत्याह – **आकाशमिति ॥** आकाशं प्रति यथेतं पुनस्तथैवाऽकाशं यान्ति, आकाशात्तु पितृलोकादिकं पूर्वप्राप्तं हित्वा वाय्वादिदेवं प्राप्नुवन्तीत्यर्थः । तदाह **'यथेतमनेवं च'**(ब्र.सू. ३-१-९) इति सूत्रकारः। वायुर्भूत्वा वायुदेवतासायुज्यादि-मान् भूत्वा धूमो भवति धूमदेवसायुज्यादिमान् भवति। एवमग्रेऽपि। तदाह सूत्रे **''तत्स्वाभाव्यापत्तिरुपपत्तेः''**(ब्र.सू. ३-१-२५) इति ॥ ५ ॥

**अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्ते ततो वै खलु दुर्निष्प्रपतनं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥ ६ ॥**

प्रवर्षति वृष्ट्यन्तर्गता भवन्ति । वृष्ट्यन्तर्गताः कर्मिणः व्रीहियवाः । जीवान्तराभिमन्यमानव्रीहियवादिषु। परगृहे पान्थ इव प्रविष्टास्तिष्ठन्तीति तेषु जातेषु जायन्त इवोच्यन्ते । इतिशब्दः आद्यर्थः । तदाह सूत्रे– **''अन्याधिष्ठिते पूर्ववदभिलापात्''**(ब्र.सू. ३-१-२८)इति। ततो व्रीह्यादिप्रवेशानन्तरं दुर्निष्प्रपतनं भवति। दुष्टपतनमेव व्यनक्ति – **यो यो हीति ॥** यो यो जनः अन्नं व्रीह्यादिरूपमद्यमानमत्ति अत्तृषु मध्ये यः पुमान् रेतो योषिति सिञ्चति तद् भूय एव अद्यमानवस्तुद्वारा रेतस्सेचकपुरुषं प्रविश्य तद्भुक्तान्नपरिणतिसारभूतरेतोगतः सन् तन्मयो भवतीत्यर्थः । तदाह सूत्रे– **''रेतस्सिग्योगोऽथ''**(ब्र.सू.३.१.२५) इति ॥ ६ ॥

**तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा**

**सूकरयोनिं वा चण्डालयोनिं वा** ॥ ७ ॥

एतमध्वानमावर्तन्ते इत्युक्त्वा पुनरागमने आकाशवाय्वादीनि रेतस्सिकूपर्यन्तानि बहूनि स्थानान्युक्तानि । तर्हि बहुस्थानगमनात् कल्पान्तपर्यन्तमागमनं भवति किम् ? इत्यतो नेति भावेन योनिप्राप्तिं च यथायोग्यमाह – **तद्य इति** ॥ तत् तत्र कर्मिणां मध्ये इह लोके ये रमणीयचरणाः शुभकर्माणः ते रमणीयां योनिं, तद् व्यनक्ति– ब्राह्मणयोनिं वैश्ययोनिं क्षत्रिययोनिं वा । प्रपद्येरन्निति यत् तदभ्याशः शीघ्रमेव । एकसंवत्सरकाल एव । तदाह सूत्रे – "**नातिचिरेण विशेषात्**" (ब्र.सू.३.१.२४) इति । अथेत्यर्थान्तरद्योतकः । कपूय-चरणाः कुत्सितकर्माणः । पूर्ववद् योजना । कपूययोनिमेव व्यनक्ति– **श्वयोनिमित्यादिना** ॥ चरणशब्दोऽत्र "अथ य इमे ग्रामे" इत्यादिना प्रकृतेष्टापूर्तादिकर्मपरो न कर्माङ्गाचारमात्रपरः । तदाह सूत्रे– '**सुकृत-दुष्कृते एवेति तु बादरिः**" (ब्र.सू.३.१.२४) इति । एतेन देवयानपितृयाणरूपमार्गद्वयोक्त्या आद्यद्वितीयप्रश्नयोरुत्तरमुक्तं ध्येयम् । यद्यप्यत्र इष्टापूर्ते इत्याद्युपक्रमाद् रमणीयचरणा एव प्रकृताः, तथाऽपि अथेति वक्ष्यमाणचतुर्थप्रश्नपरिहारोपयुक्ततया तेऽपि प्रसञ्जिता इति ध्येयम् ॥ ७ ॥

**अथैतयोः पथोर्नैकतरेण च न तानीमानि क्षुद्रमिश्राण्य-सकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयꣳ स्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत तदेष श्लोकः** ॥ ८ ॥

चतुर्थप्रश्नपरिहारमाह– **अथेति** ॥ एतयोः "तद्य इत्थं विदुः" इत्यादिना "अथ य इमे ग्रामे" इत्यादिना च प्रकृतयोः पथोः देवयान-

पितृयाणरूपमार्गसाधनभूतयोः ज्ञानकर्मणोः, ज्ञानाख्येन देवयान-मार्गोपायेन वा कर्माख्यपितृयाणमार्गोपायेन वा, कतरेण च अन्यतरेणापि न तिष्ठन्ति – ज्ञानं वा कर्म वा न सम्पादयन्तीति यावत् । तदाह सूत्रे– **'विद्याकर्मणोरिति तु प्रकृतत्वात्'** (ब्र.सू.३.१.२५) इति । तानीमानि भूतानि जन्तूनि क्षुद्रमिश्राणि सुखदुःखमिश्राणि, ''असकृदावर्तीनि'' इत्यस्य विवरणं जायस्व म्रियस्व पुनःपुनः जायन्ते म्रियन्ते चेत्येतत् तृतीयं स्थानं स्वर्गापवर्गापेक्षया तृतीयं स्थानम् । तेनासकृदावर्तनहेतुना असौ लोकस्तृतीयस्थानरूपः । न सम्पूर्यते न समाप्यते तस्मात् तादृशस्थानाद् जुगुप्सेत विरज्येत ॥ ८ ॥

**स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन् ब्रह्महा च । एते पतन्ति चत्वारः पञ्चमश्चाऽचरꣳस्तु तैरिति ॥ ९ ॥**

कपूयचरणाः के ? इत्यतः श्लोकेन तानाह – **तदेष इति** ॥ श्लोकः स्पष्टार्थः ॥ ९ ॥

**अथ ह य एतानेवं पञ्चाग्नीन् वेद न स ह तैरप्याचरन् पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १० ॥ १० ॥**

पञ्चाग्निविद्यां स्तौति – **अथ हेति** ॥ योऽधिकारी एवमुक्तदिशा एतान् द्यादिपञ्चाग्नीन् वेद, स ज्ञानी तैः उक्तपञ्चपातकिभिराचरन्नपि पाप्मना न लिप्यते । एवं ज्ञानिनः फलमाह – **शुद्ध इति** ॥ य एवं ज्ञानी पापेन न लिप्यते इति वेद सोऽपि स्वयं शुद्धः पावयत्यन्यानिति पूतः । अन्तर्णीतण्यर्थः । पुण्यलोको भवतीति ॥ १० ॥ **इति खण्डः १० ॥**

**अथ एकादशः खण्डः**

*( वैश्वानरविद्याज्ञातारो दुर्लभाः )*

**प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसाञ्चक्रुः को न आत्मा किं ब्रह्मेति** ॥ १ ॥

सर्वपापविधूननेन पुण्यलोकावाप्तिकारणपञ्चाग्निविद्योक्ता । सर्वलोकगतजीवाद्यान्नात्तृत्वापादकवैश्वानरविद्यामाख्यायिकयाऽष्टभिः पर्वभिराह – **प्राचीनशाल** इत्यादिकया ॥ प्राचीनशालो नामतः, उपमन्योरपत्यमौपमन्यवः, सत्ययज्ञो नामतः, पुलुषस्यापत्यं पौलुषिः । इन्द्रद्युम्नो नामतः, भल्लवाया अपत्यम् भाल्लवेयः । जनो नामतः, शर्कराक्षस्यापत्यं शार्कराक्ष्यः । अश्वतराश्वस्यापत्यम् आश्वतराश्विः, बुडिलो नामतः । ते हैते पञ्च, प्रत्यब्दयज्ञकृत्त्वेन महाशालाः, वेदवेदार्थवित्त्वेन महाश्रोत्रियाः समेत्य क्वचिन्मिलित्वा मीमांसाञ्चक्रुः व्यचारयन् । किमिति ? नोऽस्माकम् आत्मा आदानादिकर्ता । स्वामीति यावत्[१] । ब्रह्म गुणपूर्णं वस्तु किमिति मीमांसाञ्चक्रुरित्यन्वयः ॥ १ ॥

**ते ह सम्पादयाञ्चक्रुरुद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः** ॥ २ ॥

अन्योन्यमेवमात्मस्वरूपस्य विचारेणापि निर्णयमलभमानास्ते निर्णयार्थमुद्दालकं सम्पादयाञ्चक्रुः, निश्चिक्युरित्यर्थः । सम्पाद्यान्योन्यमूचुश्च । तत्किमूचुरित्यत आह – **उद्दालक इति** ॥ अरुणस्यापत्यमारुणिः भगवन्तः आरुणिरुद्दालकः सम्प्रति इदानीमिममात्मानं विश्वनरसम्बन्धितया वैश्वानरनामकमध्येति अधिकं जानाति । तमुद्दालकम् । हन्त

१. कः किंलक्षणक इति योज्यम् ।

हर्षे। अभ्यागच्छामेत्यन्योन्यमूचुरिति योज्यम्। इति निश्चित्य तमुद्दालक-मभ्याजग्मुः ॥ २ ॥

**स ह सम्पादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥**

स उद्दालकः। मनसाऽन्यं सम्पादयाञ्चकार निश्चितवान्। किमर्थम्? इत्यत आह – **प्रक्ष्यन्तीति** ॥ महाशाला महाश्रोत्रिया इमे मां प्रक्ष्यन्ति प्रश्नान् करिष्यन्ति। तेभ्यो वक्तुमिति शेषः। सर्वं पृष्टं वक्तुं न प्रतिपत्स्ये न ज्ञास्यामीवेतीवशब्दो निर्धारणे। अतोऽन्यमनुशासानि वदानि। हन्त हर्षे। इति निश्चित्य ॥ ३ ॥

**तान् होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥ ४ ॥**

तान् उवाच ह – **अश्वपतिरित्यादिना** ॥ हे भगवन्तः अश्वपतिः कैकेयः केकयदेशाधिपतिरयं राजा सम्प्रतीदानीमिममात्मानं वैश्वानरम् अध्येति तं हन्ताभ्यागच्छाम इत्युक्तास्ते सर्वे तमभ्याजग्मुर्ह ॥ ४ ॥

**तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार स ह प्रातः सञ्जिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद् भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥ ५ ॥**

तेभ्यो ह प्राप्तेभ्यो राजा पृथक् प्रत्येकं प्रत्येकम् अर्हाणि तत्तद्योग्यपूजाः कारयाञ्चकार भृत्यैः। स राजा परेद्युः प्रातः सञ्जिहानः

शयनादुत्थितः उवाच। किमिति ? किं चोरादिभीत्या समागताः, किं वा धनार्थित्वेन ? नाऽद्यः, अभावादित्याह– **न म इति ॥** मे मम जनपदे देशे स्तेनश्चोरो नास्ति । न कदर्यो यथाकालमाचारहीनः । न मद्यपः । स्वैरी जारः । कुतः स्वैरिणी कामचारिणी । अयक्ष्यमाणो वा कुतः । स्तेनादिरयक्ष्यमाणो वा कुतो नास्तीत्यत आह – **अहमस्मीति ॥** हे भगवन्तः चण्डशासनोऽहमस्मि तिष्ठामि । अतो न स्तेनादिरिति भावः । धनार्थिनश्चेदागतास्तर्हि यक्ष्यमाणोऽहमस्मीति वाऽन्वयः । यावद्धनम् एकैकस्मै ऋत्विजे दास्यामि तावद् भवद्भ्यो दास्यामि । वसन्तु भगवन्त इत्युवाचेत्यन्वयः ॥ ५ ॥

**ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳ हैव वदेदात्मानमेवेमं वैश्वानरꣳ सम्प्रत्यध्येषि तमेव नो ब्रूहीति ॥ ६ ॥**

एवं राज्ञोक्तास्ते पुरुषो येनार्थेन प्रयोजनेन हेतुना चरेत् तमेवार्थं वदेत् त्तं पुरुषं प्रति । वयं तु नार्थकामनया चरामः, किन्तु ब्रह्मज्ञानकामनया । त्वं तु आत्मानमेवैनं वैश्वानरं सम्प्रत्यध्येषि । तमेव नोऽस्मभ्यं ब्रूहीत्यूचुः ॥ ६ ॥

**तान् होवाच प्रातर्वः प्रतिवक्ताऽस्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच ॥ ७ ॥ ११ ॥**

तान् होवाच राजा – वः युष्मान् प्रति प्रातर्वक्ताऽस्मीति । ते ह परेद्युः प्रातःकाले समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे राजसमीपं प्राप्ताः । तान् ह राजाऽनुपनीय शिष्यत्वेनास्वीकृत्यैव एतद् वक्ष्यमाणमुवाच ॥ ७ ॥ खण्डः ११ ॥

### अथ द्वादशः खण्डः

*( वैश्वानरस्य शिरो द्युनामकमिति निरूपणम् )*

**औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥**

एभिरवगतं वैश्वानरं क्रमेण पृष्ट्वा तन्नामधेयं फलं च स्वयं वदन् विशेषाज्ञाने बाधकं चाऽऽह – **औपमन्यव इत्यादिना ॥** इत्येतदुवाचेत्यन्वयः । हे भगवो राजन्! क्रीडात्मकत्वेन दिवमित्युक्तमात्मानमहमुपास इत्युवाच औपमन्यवः । यं त्वमात्मानमुपास्से एष वै द्युनामा अतितेजस्त्वात् सुतेजा इत्युक्तः द्युलोकाधार आत्मा वैश्वानरः । तस्मात् तदुपासकत्वात् तव कुले सुतं प्रसुतमासुतं पुत्रः पौत्रः तत्पुत्रश्च दृश्यते ॥ १ ॥

**अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वनरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद् यन्मां नाऽऽगमिष्य इति ॥ २ ॥ १२ ॥**

अन्नमत्सि प्रियं च पश्यसि योऽधिकारी एतमेवं त्वदुपास्यमेवाऽऽत्मानं वैश्वानरमेवं सुतेजस्त्वादिनोक्तप्रकारेणोपास्ते, सोऽन्नमत्ति, पश्यति प्रियम् । अस्य कुले ब्रह्मवर्चसं भवति । आत्मनस्तु हरेरेष द्युनामा त्वयोपास्यो मूर्धा शिरः । एवमेकावयवोपासकस्त्वं यद् यदिमां नाऽऽगमिष्यस्तर्हि ते मूर्धा व्यपतिष्यदित्युवाच राजेति ॥ २ ॥

॥ इति द्वादशः खण्डः ॥

अथ त्रयोदशः खण्डः

*( वैश्वानरस्य चक्षुरादित्यनामकमिति निरूपणम् )*

**अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स**

**इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥**

अथानन्तरं सत्ययज्ञं पौलुषिमुवाच ह । हे प्राचीनयोग्य ! कं त्वमात्मानमुपास्स इति । स आह – **आदित्यमेवेति** ॥ आयुषामादानादादित्यनामानमात्मानमुपास इत्युवाचेत्यर्थः । राजाऽऽह – **एष इति** ॥ त्वं यमात्मानमुपासे एष वै विश्वरूपः सर्वरूपातिदर्शनात् । विश्वरूपनामा वैश्वानर आत्मा वै । तस्माद् विश्वरूपोपासकत्वादेव तव कुले गृहे बहु विश्वरूपम् अतिबहुवस्तुजातं दृश्यते ॥ १ ॥

**प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यो यन्मां नाऽगमिष्य इति ॥ २ ॥ १३ ॥**

तद् व्यनक्ति– **प्रवृत्त इत्यादिना** ॥ एवमुपासकस्य फलमाह– **अत्त्यन्नमित्यादिना** ॥ आत्मन एतत्तु त्वयोपास्यमादित्याख्यमादित्याधारमङ्गं चक्षुरेव, न सर्वाङ्गम् । अन्ध इत्यादि प्राग्वज्ज्ञेयम् । इत्युवाच राजेत्यर्थः ॥ २ ॥ **इति खण्डः १३ ॥**

## अथ चतुर्दशः खण्डः

*( वैश्वानरस्य प्राणो वायुनामक इति निरूपणम् )*

**अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्माऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वां पृथग् वलय आयन्ति**

**पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥**

'अथ होवाच' इत्यादिप्रश्नप्रतिवचने प्रागिव ध्येये । हे वैयाघ्रपद्य ! व्याघ्रपात्पुत्रेति सम्बुद्धिः । ज्ञानायुरूपत्वाद् वायुनामकं वाय्वाधारम् । एष त्वयोपास्यो वायुः पृथग्वर्त्मा प्राणादिभिरशक्यकार्यकर्तृतया पृथग्वर्त्मेत्युक्तः । पृथङ् नानाविधाः वलयः आवलयः आयन्ति । तद् विवृणोति – **पृथग् रथश्रेणय इति** ॥ गजाश्वाद्यावलीनामुपलक्षणमेतत् ॥ १ ॥

**अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद् यन्मां नाऽगमिष्य इति ॥ २ ॥ १४ ॥**

एवमुपासकस्य फलमाह– **अत्त्यन्नमित्यादि** ॥ आत्मनो वैश्वानरस्यैष त्वयोपास्यो वायुः प्राणः प्राणाख्यावयवः ॥ २ ॥ **इति खण्डः१४ ॥**

### अथ पञ्चदशः खण्डः

*( वैश्वानरस्य शरीरमध्यभागः आकाशनामक इति निरूपणम् )*

**अथ होवाच जन१ं शार्कराक्ष्य१ं शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥**

अथेत्यादि प्राग्वत् । आ समन्तात् काशते दीप्यत इत्याकाशाख्यमात्मानमुपास इति होवाच । विस्तीर्णत्वादेष बहुल इत्युक्तः । तस्माद् बहुलोपासकत्वात् ॥ १ ॥

**अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते सन्दोहस्त्वेष आत्मन इति होवाच सन्दोहस्ते व्यशीर्यद् यन्मां नाऽगमिष्य इति ॥२ ॥१५॥**

एष त्वयोपास्यो बहुल आत्मनः सन्दोहो[१] मध्यदेहः व्यशीर्यद् विशीर्णमभविष्यत् ॥ २ ॥ **इति खण्डः १५ ॥**

### अथ षोडशः खण्डः

*( वैश्वानरस्य कटिप्रदेशः अम्नामक इति निरूपणम् )*

**अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं रयिमान् पुष्टिमानसि ॥ १ ॥**

**॥ अप एवेति ॥** व्याप्तत्वादाप इत्युक्तमात्मानमुपास इत्युवाच । रयिः रतिजनकत्वाद् रयिनामा ॥१॥

**अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते वस्तिस्त्वेष आत्मन इति होवाच वस्तिस्ते व्यभेत्स्यद् यन्मां नाऽगमिष्य इति ॥२॥ १६ ॥**

**॥ वस्तिस्त्वेष इति ॥** वैश्वानरात्मनो वस्तिरूपावयव इत्यर्थः । व्यभेत्स्यद् भिन्नोऽभविष्यत् ॥ २ ॥ **इति खण्डः १६ ॥**

### अथ सप्तदशः खण्डः

*( वैश्वानरपादयोः पृथिवीनामकत्वकथनम् )*

---

१. अत्र कचित्पुस्तकेषु सन्देहशब्दो दृश्यते ।

**अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठाऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १ ॥**

पृथिवी प्रथनाद् विस्तीर्णगुणत्वेन पृथिव्याख्यम् । प्रतिष्ठितिहेतुत्वात् प्रतिष्ठा ॥ १ ॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नाऽगमिष्य इति ॥२॥१७ ॥**

एतावात्मनः पादौ । एताविति विधेयापेक्षया पुल्लिङ्गं द्विवचनं च । व्यम्लास्येतां भज्येयाताम् ॥ २ ॥ **इति खण्डः१७ ॥**

## अथ अष्टादशः खण्डः

*( हृत्कमले वैश्वानरः )*

**तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥**

एवं तैः षड्भिः प्रत्येकमुपास्यं भगवतः सुतेजःप्रभृतिनामकं शिरआद्यङ्गमेवेत्युपदिष्टमनुवदन् समग्रवैश्वानरस्वरूपं तदुपास्तिफलं चोवाच राजेत्याह श्रुतिः– **तान् होवाचेत्यादिना ॥** एते प्रसिद्धाः यूयं खलु वैश्वानरमात्मानं पृथगिवैकैकावयवं विद्वांसो जानन्तोऽन्नमत्थ भक्षयत ।

भगवदवयवानां भेदाभावात् पृथगिवेत्युक्तम् । यस्तु अधिकारी । तुशब्दो देवरूपाधिकारिविशेषद्योतकः । एतं सर्वप्राणिसन्निहितं वैश्वानरमात्मानं प्रादेशमात्रं प्रादेशपरिमितहृदयकमलव्यापित्वाद्वा तावत्परिमाणव्यक्त्या वा प्रादेशमात्रम् । **'हृद्यपेक्षया'**(ब्र.सू.१.३.५) इति सूत्रोक्तन्यायात् । अभिविमानम् अभितो विगतं मानं मर्यादा यस्येत्यभिविमानम् एवमुक्तदिशा शिरःप्रभृतिसर्वाङ्गोपेततयोपास्ते स सर्वेष्वित्यादि । भूतेषु स्थावरादिजडेषु । आत्मसु चेतनेषु । देवत्वादेवोपासकस्य तस्य मुख्यं फलम् । अन्येषां यथायोग्यम् । वैश्वानरोऽत्र विष्णुर्ज्ञेयो न भूताग्निः, तदभिमानिदेवो वा । तदाह सूत्रे **'वैश्वानरः साधारणशब्द-विशेषात्'**(ब्र.सू.१.२.२४) इति ॥ १ ॥

**तस्य हवा एतस्याऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सन्दोहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः** ॥ २ ॥ १८ ॥

भगवदङ्गानामुक्तं नामधेयं सर्वथाऽनुसन्धेयमिति भावेन तदनुवदन् होमापेक्षितमाह – **तस्येत्यादिना** ॥ तस्य वैश्वानरनाम्नो हरेः मूर्धैव सुतेजाः । अतितेजस्त्वहेतुना सुतेजोनामा द्युलोकाश्रयः । तस्य चक्षुः विश्वरूपः सर्वपदार्थविषयकतया विश्वरूपनामा विश्वरूपाख्यादित्या-श्रयः । तस्य हरेः प्राणः पृथग्वर्त्मा प्राणादिभिरशक्यकार्यकर्तृत्वात् पृथग्वर्त्मनामा वाय्वाश्रयः । तस्य हरेः सन्दोहः मध्यदेहः बहुलनामा आकाशमान्याश्रयः । तस्य नाभ्यधोभागवस्तिरूपोऽवयवो रयिः रतिद-त्वहेतुना रयिनामाऽपामाश्रयः । तस्य पादौ प्रथितत्वहेतुना पृथिवीनामा पृथिव्याश्रयौ । तस्य वैश्वानरस्य हरेः उरो वक्षः वेदिः वेद्यभिमानिनी तदाश्रितेत्यर्थः । आश्रयाश्रयिभावाभिप्रायाऽभेदोक्तिः । एवमग्रेऽपि

बर्हिरादिशब्दा अभिमानिपराः । तदाह सूत्रे – **"पुरुषविधमपि चैनमधीयते"** (ब्र.सू.१.२.३६)इति ॥ २ ॥ **इति खण्डः १८ ॥**

**अथ एकोनविंशः खण्डः**

*( 'प्राणाय स्वाहा' इत्याहुतेः फलनिरूपणम् )*

**तद्यद् भक्तं प्रथममागच्छेत् तद्धोमीयँ स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति ॥ १ ॥**

इतिकर्तव्यतासहितं होममाह– **तद्यदीति** ॥ तत् प्रसिद्धं भोज्यं **यद् भक्त**मन्नं प्रथममागच्छेदास्यं प्रति **तद्धोमीयं** होमसाधनद्रव्यम् । होममन्त्रा-नाहुतितृप्यांश्चाऽऽह – **स यामित्यादिना** ॥ स भुञ्जानः । जुहुयात् होमं कुर्यात् । जुह्वीत कुर्वीत । 'प्राणाय स्वाहा' इत्याहुत्या । प्राणः प्राणवायोरभिमानिभूतं यदादित्यस्य रूपं हृदयकमलगतस्य वैश्वानराख्यस्य हरेः पूर्वद्वारपालकं तत् तृप्यति ॥ १ ॥

**प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चाऽऽदित्यश्चाधितिष्ठतस्तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ १९ ॥**

प्राणमानिरूपे तृप्यति चक्षुर्मानि यदादित्यस्य रूपं तत् तृप्यति । चक्षुर्मानिरूपे तृप्यति आदित्यः रविबिम्बमानिसूर्यरूपं तृप्यति । त्रिरूपे आदित्ये तृप्यति द्यौर्द्युलोकमानिनी श्रीः तृप्यति । दिवि तृप्यन्त्यां द्यौः श्रीश्च प्राणचक्षुर्मण्डलानामभिमानी आदित्यश्च यत्किञ्च ज्ञानानन्दरूपं ब्रह्माख्यं वस्तु अधिकृत्य तिष्ठतस्तद् ब्रह्म तृप्यति । तस्य ब्रह्मणस्तृप्तिमनु पश्चाद् यजमानः प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेन तृप्यति ॥ २ ॥

॥ इति एकोनविंशः खण्डः ॥

## अथ विंशः खण्डः

*( 'व्यानाय स्वाहा' इत्याहुतेः फलनिरूपणम् )*

**अथ यां द्वितीयां जुहुयात् तां जुहुयाद् व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥**

दक्षिणद्वारपः व्यानवायुश्रोत्रचन्द्रबिम्बमानितया त्रिरूपश्चन्द्रो 'व्यानाय स्वाहा' इति मन्त्रेण क्रियमाणद्वितीयाहुत्या तृप्यतीत्याह– **अथ यां द्वितीयामिति ॥** प्रागिवार्थः ॥ १ ॥

**व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्चन्द्रमाश्चाधितिष्ठन्ति तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २० ॥**

दिशः दिङ्नाम्नो रमादेवी यत्किञ्च, ज्ञानरूपत्वाद् यत्, सुखरूपत्वात् किम् । यत्किञ्च ज्ञानानन्दरूपं ब्रह्मेत्यर्थः ॥ २ ॥ **इति खण्डः २०॥**

## अथ एकविंशः खण्डः

*( 'अपानाय स्वाहा' इत्याहुतेः फलवर्णनम् )*

**अथ यां तृतीयां जुहुयात् तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥**

अपानवायुवाग्भूताग्र्यभिमानी त्रिरूपोऽग्निदेवः पश्चिमद्वारपः 'अपानाय स्वाहा'इति मन्त्रेण क्रियमाणाहुत्या तृप्यतीत्याह– अथ यां

तृतीयामिति ॥ १ ॥

**अपाने तृप्यति वाक् तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २१ ॥**

पृथिवीनाम्नी भूदेवी ॥ २ ॥ **इति खण्डः २१ ॥**

## अथ द्वाविंशः खण्डः

*( 'समानाय स्वाहा' इत्याहुतेः फलवर्णनम् )*

**अथ यां चतुर्थीं जुहुयात् तां जुहुयात् समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥**

समानवायुमनःपर्जन्यानामभिमानितया त्रिरूप इन्द्र उत्तरद्वारपः 'समानाय स्वाहा' इति मन्त्रेण क्रियमाणाहुत्या तृप्यतीत्याह – **अथ यां चतुर्थीमिति** ॥ १ ॥

**समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत् तृप्यति विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २२ ॥**

**पर्जन्यः** मेघचक्रमानीन्द्रः । **विद्युद्** विद्युन्मानिनी वायुपत्नी ॥ २ ॥

॥ इति द्वाविंशः खण्डः ॥

## अथ त्रयोविंशः खण्डः

*( 'उदानाय स्वाहा' इत्याहुतेः फलवर्णनम् )*

**अथ यां पञ्चमीं जुहुयात् तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥**

उदानवायुवाय्वाकाशमानितया त्रिरूपो मुख्यवायुरूर्ध्वद्वारपः 'उदानाय स्वाहा' इति मन्त्रेण क्रियमाणाहुत्या तृप्यतीत्याह– **अथ यां पञ्चमीमिति** ॥ १ ॥

**उदाने तृप्यति वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किञ्च वायुश्चाऽऽकाशश्चाधितिष्ठतस्तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥**

**वायुः** प्रसिद्धवायुमानी । **आकाशः** आकाशमानी विशेषेण लक्ष्म्याविष्टतयाऽऽकाश इत्युक्तो मुख्यवायुः आकाशश्च । वायौ विशेषसन्निधियुता लक्ष्मीरित्यर्थः ॥२॥ खण्डः २३॥

## अथ चतुर्विंशः खण्डः

*( ज्ञानपूर्वककर्मणः फलप्रदत्वनिरूपणम् )*

**अथ स य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि जुहुयात् तादृक् तत् स्यात् ॥ १ ॥**

एवं वैश्वानरस्वरूपं तद्विषयहोमं चोक्त्वा तज्ज्ञानपूर्वकहोमफलं तदज्ञानपूर्वकहोमवैफल्योक्त्याऽऽह– **स य इदमिति** ॥ **स** भुञ्जनो यः कश्चिद् **इदं** वैश्वानरस्वरूपादिकम् **अविद्वान्** अजानन् प्राणाग्निहोत्रं **जुहोति** करोति । **अङ्गारानपोह्य** परित्यज्य **भस्मनि** यथा **जुहुयात्** । तद्

अज्ञानकृतं प्राणाग्निहोत्रं तादृक् तत्तुल्यं निष्फलमिति यावत् ॥ १ ॥

**अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥**

ज्ञानपूर्वानुष्ठाने फलोक्तिः– **अथ य एतदिति** ॥ तस्य तेन । हुतं भवतीत्यन्वयः । यद्वा, सर्वलोकादिषु हुतं तस्यैव भवतीत्यर्थः ॥ २ ॥

**तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥**

फलान्तरं चाऽह – **तद्यथेति** ॥ वक्ष्यमाणनिदर्शनं यथा । इषीकातूलमिति छान्दसो ह्रस्वाभावः 'इष्टकेषीकामालानां चिततूलभारिषु' इत्युक्तेरिषीकतूलमिति भाव्यत्वात् ॥ ३ ॥

**तस्मादु हैवंविद् यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद् वैश्वानरे हुतꣳ स्यादिति तदेष श्लोक : ॥ ४ ॥**

तस्मादुक्तरीत्या वैश्वानरज्ञानस्य सर्वपापक्षयादिहेतुत्वात् । उच्छिष्टमपात्रे दत्तं वैश्वानरे आत्मनि अस्य अनेन तद्धुतं स्यात् ॥ ४ ॥

**यथेह क्षुधिता बाला मातरं पर्युपासते ।**
**एवं सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥ ५ ॥ २४ ॥**

॥ इति श्रीमच्छान्दोग्योपनिषदि पञ्चमोऽध्यायः ॥ ५ ॥

वैश्वानरज्ञानपूर्वकं कृतं प्राणाग्निहोत्रं सर्वाभीष्टप्रदमित्युक्तमर्थं मन्त्रेण संवादयति – **तदेष इति** ॥ इह लोके सर्वाणि भूतानि अभीष्टापेक्षाणि प्राणाग्निहोत्रमुपासते । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ ५ ॥ २४ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते पञ्चमोऽध्यायः ॥

॥ अथ श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते षष्ठाध्याये प्रथमः खण्डः ॥

## उपनिषत्

*( श्वेतकेतुवृत्तान्तः )*

ॐ श्वेतकेतुर्हाऽरुणेय आस तꣳ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ।

*( श्वेतकेतोरहङ्कारपरिहारः )*

स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तꣳ ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः । येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति । कथं नु भगवः स आदेशो भवतीति ।

*( भगवति विज्ञाते सर्वं विज्ञातप्रायमिति निरूपणम् )*

यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳ स्याद् वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ १ ॥

जीवजडात्मकात् प्रपञ्चाद् भिन्नं ततोऽधिकं भगवन्तं जानतां स्वर्गमोक्षफलिका उपास्तय उक्ताः पूर्वाध्यायेषु । षष्ठाध्याये तु जीवेश्वरभेदविषयं सन्दिग्धं विपर्यस्तं वा प्रतीश्वराद् भेदो मोक्षोपयोगी

युक्तिभिर्बोध्यते । तत्र तावत् श्वेतकेतुं निमित्तीकृत्य जीवानां भगवतो भेदं बोधयन् भेदबोधनाय अभेदप्रसक्तिमाह– **श्वेतकेतुरित्यादिना** ॥ श्वेतकेतु-र्नामतः, अरुणस्य पौत्र आरुणेयः आस । ह प्रसिद्धम् । तं पिता उवाच ह । ब्रह्मचर्यं वेदाध्ययनमुद्दिश्य वस, गुरुकुले वेदाध्ययनादिकं कुर्वित्यर्थः । कुतः? हे सोम्य अस्मत्कुलीनः अस्मत्कुले जातः यः कोऽप्यननूच्यानधीत्य ब्रह्मबन्धुरिव ब्राह्मणाभास इव न वै नैव भवत्यत इत्युवाचेत्यन्वयः । एवं पित्रोक्तः श्वेतकेतुः द्वादशवर्षः द्वादशवर्षवयस्कः गुरुकुलमुपेत्य प्राप्य चतुर्विंशतिवर्षः तावद्वयस्कः सन्, सर्वान् वेदानधीत्यानूचानमानी साङ्गवेदाध्ययनवानहमित्यभिमानवान्, अत एव महानस्मीति मनो यस्यासौ महामनाः, अत एव स्तब्धः अविनीतः एयाय आजगाम । तमागतं पुत्रं पिता स्तब्धोऽसीत्यन्तं वाक्यमुवाच । स्तब्धोऽसीतीदं यन्नु किन्चित्यर्थः । येन श्रुतेन मतेन विज्ञातेनान्यदश्रुतममतमविज्ञातमपि श्रुतं मतं विज्ञातं भवति तमादेशमुद्दिश्यमानार्थमप्राक्ष्यः पृष्टवानभूः । उत तत् [१] किं यद्विषयश्रवणमननविज्ञानेन कर्मदेवतादिजगद्विषयश्रवणादि भवति तद्वस्तु श्रुतवानसि किम् ? प्रायेण न श्रुतवान् , अन्यथा कथं ते महामनस्त्वादिकं भवेदिति चोवाचेत्यन्वयः । अन्यज्ञानेनान्यज्ञानस्य क्वाप्यदर्शनादिति भावेन पुत्रः पृच्छति – **कथमिति** ॥ हे भगवः ! स आदेशः अन्यज्ञानेनान्यज्ञानं भवतीत्युपदेशः कथं नु कीदृश इति पप्रच्छ पुत्र इत्यर्थः । इति पृष्टः पिता उद्दालकः अन्यज्ञानेनान्यज्ञानप्रकारं षड्भिर्दृष्टान्तैरुपपादयति – **यथेति** ॥ हे सोम्य ! एकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं मृद्विकारजातं मृत्त्वसादृश्यहेतुना विज्ञातं भवति । एकस्मिन् मृत्पिण्डे ज्ञाते सति मृन्मयेषु सर्वेषूपदेशं विनैव विज्ञातमृत्पिण्डसादृश्यादेते मृद्रूपा इति यथा ज्ञायन्ते, तथा भगवति

---

१. 'तत्' इत्यधिकमिति भाति ।

सत्यत्वादिना ज्ञाते सति सत्यत्वप्रामाणिकत्वादिसादृश्याद् जगदपि तथा ज्ञायत इत्यर्थः । भगवतः प्रधानत्वाद् जगतोऽप्रधानत्वात् प्रधानज्ञानादप्रधानं ज्ञातवद् भवतीत्येतद् दृष्टान्तेनोपपादयति – **वाचाऽऽरम्भणमिति** ।। यथा सोम्येत्यनुपज्यते । हे सोम्य ! वाचा वागिन्द्रियेण नाम्नां संस्कृतेतरभाषाशब्दानामारम्भणमुच्चारणं विकारः उत्पादनम् । न तु संस्कृतानामिव व्यञ्जनम् । अतस्तान्यनित्यानि । मृत्तिकेत्युपलक्षणम् । मृत्तिकेत्यादिसंस्कृतं नामधेयम् अविकारः अत एव सत्यं नित्यमित्यर्थः । अतो नित्यत्वात् संस्कृतं नामधेयं प्रधानम् । संस्कृतान्यनामानि तु पुरुषभेदेन विक्रियमाणतयाऽनित्यत्वेनाप्रधानानि । संस्कृतेतरापभ्रंशभाषाशब्दज्ञानेन यत् फलं तत् फलं संस्कृतशब्दज्ञानेन यथा भवति, तथा कर्मदेवतादिजगज्ज्ञानेन यत्फलं तत्सर्वं प्रधानभूतभगवज्ज्ञानेन भवतीति भावेन येन श्रुतेन मतेन विज्ञातेनाश्रुतममतमविज्ञातं जगत् श्रुतमतविज्ञातफलं भवतीत्युक्तमिति स्वाभिप्रायं प्रकटितवानुद्दालक इत्यर्थः । अनुव्याख्यानसुधयोस्तूक्तम् । वाचारम्भणमिति बहुव्रीहिः । वाचा वागिन्द्रियेणाऽऽरम्भणम् उच्चारणं यस्य तद्वाचारम्भणम् । नामधेयं विकारः । विक्रियमाणमुत्पत्तिमत् । अत एवानित्यम् । तस्मात्तदप्रधानम् । मृत्तिकेत्यादिकं वैदिकं नामधेयं सत्यं नित्यं तत एव प्रधानमिति । तात्पर्यं तु प्राग्वत् ।। १ ।।

**यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳ स्याद् वाचाऽऽरम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम् ।। २ ।।**

प्रधानज्ञानादप्रधानं ज्ञातफलं भवतीत्यत्र दृष्टान्तान्तरमाह – **यथा सोम्येति** ।। एकेन लोहमणिना सुवर्णेन ज्ञातेनेति शेषः । यथा स्वर्णस्य विज्ञानात् साधनानुष्ठानेन तल्लाभे च सति सर्वे लोहमयाः ज्ञातलब्धफला भवन्ति, एवं प्रधानेन विष्णुना श्रुतादिना निमित्तेन कर्मदेवतादि-

जगदश्रुताद्यपि श्रुतमतादिफलं भवतीति भावेन येनाश्रुतमिति वाक्येन एकविज्ञानेन सर्वज्ञानमुक्तमिति। अत्रैवार्थे दृष्टान्तान्तरम्– **वाचेत्यादि**॥ यथा सोम्येत्यनुषज्यते। पूर्ववाक्य इवास्याप्यर्थः। **'लोहमणिः'** इत्येव वैदिकं नामधेयं सत्यं नित्यमित्यर्थः ॥ २ ॥

**यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्याद् वाचाऽऽरम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यमेवꣳ सोम्य स आदेशो भवतीति ॥ ३ ॥**

कैमुत्येनाप्येकज्ञानेन सर्वविज्ञानं दृष्टान्तेन व्यनक्ति – **यथा सोम्येति** ॥ एकेनात्यल्पेनापि नखनिकृन्तनेन विज्ञातेन तत्सादृश्यात् सर्वं कार्ष्णायसं विज्ञातं भवति। किम्? महतो भगवतः सत्यत्वचिद्रूपत्वादिना ज्ञाने सति तत्सादृश्यात् सर्वं जीवजडादिकं ज्ञायत इति किमु वाच्यमिति भावेन **'येनाश्रुतम्'** इत्याद्युक्तमिति। प्रधानज्ञानादप्रधानं ज्ञातफलं भवतीत्यत्र दृष्टान्तान्तरं – **वाचेत्यादि** ॥ प्रागिवार्थः। **'न च वाचा'** इत्यादिदृष्टान्तत्रयं लोहमणिदृष्टान्तश्चैक इति दृष्टान्तचतुष्टयम् एकस्मिन्नेवार्थे किमर्थमिति शङ्क्यम्। तत्त्वस्य दुर्गमत्वेनानेकदृष्टान्तोक्तेरर्थवत्त्वात्। अत एवात्र पूर्वाध्याये एकस्मिन्नेवार्थे एकपाद् व्रजन् रथो वा एकेन चक्रेणेति लवणेन सुवर्णमित्याद्यनेकदृष्टान्तोक्तिः। तदाह सूत्रे **'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके'** (ब्र.सू.१.४.१९) इति। कथं नु भगवः स आदेश इति प्रश्नस्योत्तरमुक्त्वोपसंहरति – **एवं सोम्येति** ॥ ३ ॥

**न वै नूनं भगवंस्तस्य एतदवेदिषुर्यद्येतद् अवेदिष्यन् कथं मे नावक्ष्यन्निति भगवाꣳस्त्वेव मे तद् ब्रवीत्विति तथा सोम्येति होवाच ॥ ४ ॥ १ ॥**

एवमुक्तः पुत्र आह– **न वा इति** ॥ भगवन्तस्ते मह्यमुपदेष्टारः एतत् त्वयोक्तं एकविज्ञानरूपतत्त्वं नूनं नवै नैवावेदिषुः न ज्ञातवन्तः । कुतः ? यद् यदि अवेदिष्यन् ज्ञातवन्तः, 'कथं मे मह्यं नावक्ष्यन् इति हेतोर्नूनं प्रायो नावेदिषुरिति हि यतोऽतः भगवानेव तु तत् मे मह्यं ब्रवीत्विति पुत्र उवाचेत्यर्थः । तथाऽस्त्विति पितोवाच हेति ॥ ४ ॥

**॥ इति प्रथमः खण्डः ॥**

## अथ द्वितीयः खण्डः

*( एकमेवाद्वितीयं ब्रह्म )*

**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरसदेवेद-मग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत इति ॥ १ ॥**

प्रधानत्वाद् ब्रह्मणि ज्ञाते अप्रधानं जगदपि ज्ञातफलं भवतीत्युक्तम् । कथं ब्रह्मजगतोः प्राधान्याप्राधान्ये ? इत्यतः स्रष्टृसृष्टभावेनेति भावेन सोपोद्घातं सृष्टिमाह – **सदेवेत्यादिना** ॥ इदम् अस्य जगतः । अग्रे पूर्वं प्रलये । सर्वोत्तमत्वहेतुना सदेव सन्नामकं ब्रह्मैवाऽसीद् अवर्तत । तद्विशिनष्टि – **एकमिति** ॥ एकं स्वीयगुणकर्मरूपादिभेदहीनं, एवं गुणकर्मादिभिर्भेदाभेदहीनम् अद्वितीयं समाभ्यधिकहीनम् । स्वमत-विरुद्धमनुवदन् दूषयति श्रुतिः **तद्धैक इत्यादिना** ॥ तत् तत्र सृष्टिविषये एके शून्यवादिनः इदं जगदग्रे प्रलये असदेव शून्यात्मकमेवाऽसीत् । **एकमेव** भेदशून्यमेव । **अद्वितीयं** द्वितीयवस्तुहीनम् आसीत् तस्मादसतः शून्यात् सज्जायते सदजायत इत्याहुर्हेत्यर्थः ॥ १ ॥

**कुतस्तु खलु सोम्यैवँस्यादिति होवाच कथमसतः सज्जायेतेति सत् त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥**

तद् दूषयति – हे सोम्य ! कुतस्तु खलु एवम् असतस्सत्त्वं प्रलये स्यादिति असतः सज्जायेतेति च कथं स्यान्न कथमपीति च होवाच पिता। एवं परमतं विनिन्द्य पुनः स्वमतमेव स्थिरीकरोति – **सत् त्वेवेति** ॥ सर्वोत्तममेव ब्रह्म प्रपञ्चस्याग्रे एकमेवाद्वितीयं भूत्वा आसीदिति। तुशब्देन तस्य सस्वरूपत्वादासीदिति सत्त्वं जगत्कर्तृत्वं च युक्तमिति सूचयति ॥ २ ॥

*( भगवतः सकाशादादिसृष्टिकथनम् )*

**तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥ ३ ॥**

तस्य ब्रह्मणः प्रलयान्त्यभागे सृष्ट्यर्थं विचारः समजनीत्याह – **तदैक्षतेति** ॥ **तत्** सच्छब्दितं ब्रह्म । **ऐक्षत** व्यचारयत् । कथम् ? बहु नियामकनानारूपं स्यां भवेयम् । नियामकनानारूपभवनार्थं नियम्यानि प्रजायेय प्रजनयेयं उत्पादयानीत्यैक्षतेत्यर्थः । तदाह सूत्रे – **'ईक्षतिकर्मव्यपदेशात् सः'**(ब्र.सू. १-२-१३) इति । तद् एवमीक्षमाणं सच्छब्दितं ब्रह्म । तेजः, ते तते व्याप्ते हरौ प्रकृतौ वा स्थितेन रूपेणाजत्वेनानुत्पत्तिमत्त्वेन वर्तत इति वा ते, पञ्चम्यर्थे सप्तमी, तात् व्याप्ताद्धरेर्जायते विद्याख्यजगत्स्रष्टृरूपेण प्रादुर्भवतीति वा तेजःशब्दिता श्रीः । तां तदभिमन्यमानं तेजोभूतं चासृजत । तत्तेजः तेजोभूतमानिनी श्रीरैक्षत । कथम् ? बहुस्यामित्यादि प्राग्वत् । तत् तेजः अपः अबभिमानिनमप्शब्दितं प्राणं तदभिमता अपश्चासृजत । अपां तेजःकार्यत्वमनुभवारूढं करोति – **तस्मादिति** ॥ अपां तेजःकार्यत्वाद् यत्र क्व च देशे काले वा शोचति तापो जायते स्वेदते वा पुरुषः तत् तत्र तदा वा

तेजस एवाऽपो जायन्ते ॥ ३ ॥

**ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद् यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदन्नाद्यं जायते ॥ ४ ॥ २ ॥**

ता आपः प्राण ऐक्षन्तेत्यादि प्राग्वत् । ताः अबभिमानी प्राणः अन्नम् अन्नशब्दितपृथिवीमानिनं रुद्रम् । अत्र तेजःप्रभृतिशब्दा अभिमानिपरा अपि ध्येयाः, **'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्'** (ब्र.सू. २-१-६) इति सूत्रात् अन्नं पृथिवी ग्राह्या । **'पृथिव्यधिकार-रूपशब्दान्तरादिभ्यः'** (ब्र.सू. २-३-१२) इति सूत्रात् । अन्नस्या-ब्जातत्वमनुभवारूढं करोति – **तस्मादिति** ॥ अन्नस्याब्जातत्वादेव यत्र क्व च वर्षति तदेव तत्रैव भूयिष्ठमन्नं पार्थिववस्तुजातं भवति जायते । निगमयति – **अद्भ्य एवेति** ॥ ४ ॥ २ ॥

**॥ इति द्वितीयः खण्डः ॥**

**अथ तृतीयः खण्डः**

*( नामरूपात्मकप्रपञ्चस्य सृष्टिकथनम् )*

**तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्यण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥**

अभिमानिसहिततेजोबन्नोत्पत्तिमुक्त्वा तत्प्राधान्यज्ञापनाय तानि चतुर्विधभूतकारणानीत्याह– **तेषामिति** ॥ तेषां प्रसिद्धानामेषां वक्ष्यमाणानां भूतानां प्राणिनां त्रीण्येव बीजानि कारणानि भवन्ति खल्विति । उक्तभूतान्याह – **अण्डजमिति** ॥ **अण्डजं** पक्ष्यादि । **जीवजं**

जरायुजं मनुष्यादि । उद्भिद्य जायत इति उद्भिज्जं वृक्षादि । स्वेदजं च ग्राह्यम् ॥ १ ॥

**सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥ २ ॥**

तेजोबन्नसृष्ट्यनन्तरं विचारपूर्वकं कृतमाह श्रुतिः – **सेयमिति** ॥ सा सदेवेत्युक्ता इयं तेजोबन्नस्रष्ट्री विष्ण्वाख्या देवता ऐक्षत । कथम् ? हन्त हर्षे । अहं ता इमास्तिस्रस्तेजोबन्नाख्या देवताः । साभिमन्यमाना इति ग्राह्यम् । अनेन जीवेन जीवाख्येनानिरुद्धात्मना अनुप्रविश्य नामरूपे शब्दात्मकार्थात्मकजगती करवाणि कुर्यामित्यैक्षतेत्यन्वयः ॥ २ ॥

**तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् ॥ ३ ॥**

नामरूपनिर्माणार्थं तासां मध्ये एकैकां तदभिमन्यमान-तेजःप्रभृतिष्वेकैकं च त्रिवृतं करवाणि तिसृभ्यो देवताभ्यस्त्रिभ्यः तेजोबन्नेभ्यश्च क्रमात् त्रीन् चेतनांशान् त्रीन् जडांशांश्चोद्धृत्यांशषट्कं मिश्रीकृत्य एकं तेजआख्यमबाख्यं पृथिव्याख्यं च मिश्रीभूतवस्तुत्रयं करवाणीति चैक्षतेत्यर्थः । एवमीक्षित्वा तत् तथा कृतवानित्याह – **सेयं देवतेति** ॥ देवताः अभिमन्यमानसहिता इति योज्यम् । नामरूपे देवदानवमानवादीनामिन्द्राग्न्यादिनामानि तत्तच्छरीरादिरूपशब्दित-वस्तूनि च व्याकरोद् विशिष्याकरोत् ॥ ३ ॥

**तासां त्रिवृतं त्रिवृतमेकैकामकरोद् यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ४ ॥ ३ ॥**

अत्र तासां त्रिवृतं कृत्वा पश्चान्नामरूपे व्याकरोदिति

त्रिवृत्करणनामरूपकरणयोः पौर्वापर्यं ध्येयम् । त्रिवृत्करणपूर्वकं नामरूपकर्ता विष्णुरेवेत्युक्तं सूत्रकृता – **'सञ्ज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्'** (ब्र.सू.'२.४.२१) इति । अत्रायं क्रमः । पूर्वं लक्ष्म्यादीन् तदभिमन्यमानतेजःप्रभृतिसहिताननुप्रविश्य तत्तदंशैस्त्रिवृतमेकैकं कृत्वा तेभ्य इन्द्रादिनामरूपाण्यकरोत् । तानपि साभिमन्यमानान् तेजःप्रभृतिदेवतांशैरनुप्रविश्य तेषामंशान् मिश्रीकृत्य तेभ्य अभिमन्यमानसहिताग्न्यादिनामरूपाण्यकरोत् । पुनरग्न्यादिषु सर्वत्र तेजोबन्नदेवाननुगतानकरोदिति । एवमग्न्यादयः सर्वे भावाः साक्षात् परम्परया वा तेजोऽबन्नकार्याणीत्युक्तम् । सर्वेषां नामरूपे अपि तेजोबन्नाद्यभिमानिलक्ष्म्याद्युद्भवत्वात् तदधीने इति चोक्तम् । एतदुभयमनुभवारूढं दर्शयितुं प्रतिजानीते– **यथेति** ।। हे सोम्य इमास्तिस्रो देवता एकैका त्रिवृत् त्रिवृद् भवति यथा खलु सर्वं तत्कार्यं च भवति । सर्वेषां नामरूपे तदधीने इति यत् तत्सर्वं वदतो मे विजानीहि । यज्ज्ञाने सति न कमपि नमस्कुर्यां महाप्राज्ञोऽहम् इत्यहङ्कारं जह्याः, इत्युवाच पितेत्यर्थः ।। ४ ।। ३ ।।

**।। इति तृतीयः खण्डः ।।**

## अथ चतुर्थः खण्डः

*( सृष्टेः लक्ष्मीप्राणरुद्रद्वारा भगवदधीनत्वनिरूपणम् )*

**यदग्ने रोहित९ँ रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां, यत् कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्** ।। १ ।।

अहङ्कारमोचनाय प्रतिज्ञामाह– **यदग्नेरिति** ।। अग्नेर्यल्लोहितं रूपं तत्तेजसो रूपम् । तेजोरूपसमुद्भवं तत् तेजोदेव्यधीनं च । यदग्नेः शुक्लं

रूपं तद् अपां रूपं अब्रूपसम्भवम् अब्देवप्राणाधीनं च । यदग्नेः कृष्णं रूपं तद् अन्नस्य पृथिव्याः रूपं पृथिवीदेवशिवाधीनं चेत्यर्थः । न केवलं रूपमेवान्याधीनत्वादिना न मुख्यम् । किन्तु नामापीत्याह– **अपागादिति** ॥ अग्नेरग्निनाम्नो यदग्नित्वमग्निनामप्रवृत्तिनिमितं तदग्नेः सकाशादपागात् अपगतमभूत् । मुख्यतो नास्त्यतोऽग्निनामापि मुख्यं नास्तीत्यर्थः । कुत इत्यत आह– **वाचेति** ॥ यस्याग्निनाम्नोऽग्नौ वाचा वागिन्द्रियेण आरम्भणमुच्चारणं तन्नामधेयं विकारः जनिमत् । अन्यत्र मुख्यं सदग्नौ साङ्केतिकम् । न त्वनादितस्तस्यैव सिद्धमतोऽमुख्यम् । तर्हि कुत्र मुख्यमित्यत आह – **त्रीणीति** ॥ तेजोबन्नाख्यानि यानि त्रीणि श्रीप्राणशिवाख्यमेतत् त्रयमेवाग्निनाम्नः सत्यं मुख्यवाच्यमित्यर्थः ॥ १ ॥

**यदादित्यस्य रोहित॑ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्** ॥ २ ॥

**यच्चन्द्रमसो रोहित॑ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्** ॥ ३ ॥

**यद् विद्युतो रोहित॑ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्यापागाद् विद्युतो विद्युत्त्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्** ॥ ४ ॥

एवमादित्यस्येत्यादिवाक्यत्रयस्यापि व्याख्या ध्येया ॥ २-४ ॥

**एतद्ध स्म वै तद्विद्वा॑स आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ते ह्येभ्यो**

**विदाञ्चक्रुः** ॥ ५ ॥

एकविज्ञानेन सर्वविज्ञानादिकमुपदेशपरम्परागतं चेत्याह – **एतद्ध स्मेति** ॥ तत्सादृश्यप्राधान्यरूपहेतुभ्यां ब्रह्मज्ञानेन कर्मदेवतादि सर्वं जगज्ज्ञातमिव भवति । प्राधान्यं च हरेर्जगत्कर्तृत्वेन । कर्तृत्वं च तेजोबन्नानां सचेतनानां त्रिवृत्करणेनेत्यादि प्रमेयं विद्वांसो जानन्तो महाशाला महाश्रोत्रियाः पूर्वे नोऽस्माकमश्रुतममतमविज्ञातमस्तीति कश्चन कोऽप्यद्यतनो नोदाहरिष्यति न व्यवहरिष्यतीत्येतदाहुर्ह स्म वै । प्रधान-भगवज्ज्ञानेन सर्वस्य ज्ञातफलत्वादिति भावः । एभ्यः तद्धिद्वांस इत्यत्रोक्तप्रमेयज्ञानिभ्यः पूर्वेभ्यः अन्ये विदाञ्चक्रुः एकविज्ञानेन सर्वविज्ञानादिप्रकारं ज्ञातवन्तः ॥ ५ ॥

**यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद् विदाञ्चक्रुर्यदु शुक्लमिवाभूदित्यपाᳪरूपमिति तद् विदाञ्चक्रुर्यदु कृष्णमिवा-भूदित्यन्नस्य रूपमिति तद् विदाञ्चक्रुः** ॥ ६ ॥

तैर्ज्ञातप्रकारं लेशतोऽनुवदति श्रुतिः – **यदु रोहितमिति** ॥ रोहितमिव लोहितमिवाभूदिति यत् । उ खलु अस्ति तत् तेजसो रूपं तेजोरूपसम्भूत-म् । तेजोदेव्यधीनं चेति तद् विदाञ्चक्रुरित्यर्थः । यदु शुक्लमित्यादि-वाक्यद्वयमप्येवं ध्येयम् । इवशब्दोऽमुख्यत्वद्योतकः ॥ ६ ॥

**यद्वविज्ञातमिवाभूदित्येतासामेव देवतानाᳪ समास इति तद्विदाञ्चक्रुर्यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति** ॥ ७ ॥ ४ ॥

यदु यत्खलु अविज्ञातमिव तेजःप्रभृत्यात्मकत्वेन स्फुटमविज्ञात-मिवाभूत् तदप्येतासां तेजोबन्नदेवतानां समास इति सङ्क्षेपः समुदाय इति

तद् विदाञ्चक्रुरित्यर्थः । पृथिव्यादेस्तेजआद्यात्मकत्वं प्रकारान्तरेण ज्ञापयितुं प्रस्तावयति – **यथा तु खल्वित्यादिना** ॥ इमाः तेजोबन्नसहिताः श्रीप्राणशिवाख्यास्तिस्रो देवताः। पुरुषं जीवशरीरम्। इत्युवाच पितेत्यर्थः ॥ ७ ॥

## ॥ इति चतुर्थः खण्डः ॥

## अथ पञ्चमः खण्डः

*( लक्ष्मीप्राणरुद्राः तेजोप्पृथिव्यश्च अन्योन्यांशयुक्ताः इति निरूपणम् )*

**अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति यो मध्यमस्तन्मा९सं योऽणिष्ठस्तन्मनः ॥ १ ॥**

**'तन्मे विजानीहि'** इति प्रतिज्ञातं दर्शयति– **अन्नमिति** ॥ अन्नम् अदनयोग्यं पार्थिवं वस्तु प्राणिभिरशितं भक्षितं स त्रेधा विधीयते । कथं यद् यः स्थविष्ठः स्थूलतमस्तस्याशितस्य धातुभागः तत् पुरीषं विष्ठा भवति। यो मध्यमः धातुरित्यनुषङ्गः, तन्मांसम्। योऽणिष्ठस्तन्मनस्तस्येति मध्यमोऽणिष्ठ इत्युभयत्राप्यनुषज्यते । अत्रान्नपदेन पृथिव्याः प्रकृतत्वेऽपि तस्या अदनायोगात् तदुपादानकतया तदात्मकं पार्थिवमदनार्हं ग्राह्यम् । अन्नाबादिशब्दैश्च पृथिव्यप्तेजोभिमान्यंशैरुपेतान्येवाद्यमानजडानि ग्राह्याणि । अभिमान्यंशानामद्यमानत्वं प्राणिभिरुपजीव्यत्वमेव । चिदचिन्मिलितमेव अन्नादिकमद्यमानं सत् स्वस्वांशैस्त्रेधा भूत्वा मांसाद्यात्मकं भवति । चिदंशस्य मांसादिभावस्तत्र सन्निधिविशेष एवेति ध्येयम् । प्रत्यहं भुज्यमानान्नादिमध्यमाणिमाभ्यां मांसमनःप्रभृतेर्भवनं नामोपचयो ध्येयः । गर्भे च मातृभुक्तान्नादिना च परिणामः केषाञ्चित्केषाञ्चिदुपचय इति ज्ञेयम् ॥ १ ॥

**आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ॥ २ ॥**

आपः अबभिमान्यंशोपेता आपः पीताः द्विरूपांशैस्त्रेधा विधीयन्ते । शिष्टं व्यक्तम् । विष्ठामूत्रयोरपभ्रष्टदेवांशावित्येके । अत एव भाष्ये देवता एव मांसादिशब्दवाच्यास्तत्र प्रवेशादित्येवोक्तमित्याहुः । अन्ये तु अन्नाभिमान्यंशयोस्तत्रापि सत्त्वाङ्गीकारेऽपि निर्लेपत्वात् तयोर्न दोष इत्याहुः ॥ २ ॥

**तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक् ॥ ३ ॥**

तेजोऽशितं तैजसं घृतादिसारवस्तु अभिमानिसहितं व्यक्तमन्यत् ॥ ३ ॥

**अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥ ५ ॥**

उत्तरग्रन्थोपयुक्ततयोक्तं मध्ये प्राधान्यान्मनआद्यंशमेवानुवदति – **अन्नमयं हीति** ॥ आपोमयोऽम्मय इत्यर्थः । अत्र मांसादीनामन्नाद्येकैकभूतमयत्वोक्तावप्यन्नशब्दितपृथिव्यादेस्त्रिवृत्करणेन त्र्यात्मकत्वात् मांसादेस्त्र्यात्मकत्वमेव ध्येयम् । तदुक्तं **'मांसादिभौमं यथाशब्दमितरयोश्च'** (ब्र.सू.२.४.२२.) इति । अन्नमयत्वादिविशेषोक्तिस्तु **'वैशेष्यात्तु तद्वादः'** (ब्र.सू.२.४.२३) इत्युक्तदिशा ध्येया । अन्नमयं हि मन इत्याद्युक्तमर्थं दृष्टान्तेन स्पष्टं बोधयेति भावेनाऽह पुत्रः – **भूय इति** ॥ भगवान् मा मां भूय एव पुनरेव

विज्ञापयतु विशेषेण बोधयतु इति पुत्रेणोक्तः पितोक्तवानित्याह – **तथाऽस्त्वित्युवाचेति** [१] ॥ ४ ॥ ५ ॥

**॥ इति पञ्चमः खण्डः ॥**

**अथ षष्ठः खण्डः**

*( वाक्प्राणमनांसि लक्ष्मीप्राणरुद्रायत्तानि )*

**दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत् सर्पिर्भवति** ॥ १ ॥

उक्तमर्थं दृष्टान्तेन बोधयति – **दध्न इति** ॥ सोम्य दध्नो मथ्यमानस्य समुदीषति। नवनीतरूपेणोद्गच्छति ॥ १ ॥

**एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति** ॥ २ ॥

**अपाꣳ सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति** ॥ ३ ॥

**तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग् भवति** ॥ ४ ॥

अश्यमानस्यौदनादेरन्नस्य वैश्वानरेण पच्यमानस्य योऽणिमा सारांशः। एवमग्रेऽपि। शिष्टं व्यक्तम्। मनआदिभवनं मनआदेरुपचयो ज्ञेयः ॥ ४ ॥

---

१. 'तथा' इत्येव प्रतीकग्रहणं साधु इति भाति।

**अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच**

**॥ ५ ॥ ६ ॥**

उक्तमुपपाद्योपसंहरति – **अन्नमयं हि सोम्येत्यादिना** ॥ मनआदेरन्नमयादित्वमनुभवारूढं कुर्विति भावेनाऽह पुत्रः – **भूय एवेति** ॥ पिता वक्ति – तथेति ॥ ५ ॥ **इति षष्ठः खण्डः** ॥

## अथ सप्तमः खण्डः

*( 'अन्नाभिमानिदेवतायत्तं मनः' इत्येतदनुभववेद्यम् )*

**षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माऽशीः काममपः पिबाऽपोमयः प्राणो न पिबतो विच्छेत्स्यत इति ॥ १ ॥**

मनआदेरन्नादिमयत्वमनुभवारूढं व्यतिरेकान्वयोक्त्या करोति – **षोडशकल इत्यादिना** ॥ हे सोम्य ! पुरुषो जीवः । षोडशकलः '**स प्राणमसृजत प्राणाच्छ्रद्धाम्**' इत्यादिना षट्प्रश्नोक्तदिशा प्राण-वाणी-विनायक-प्राणसुतमरुत्-पावक-बुध-शनि-इन्द्र-रुद्र-चन्द्र-वरुण-वह्नि-स्वाहा-पुष्कर–पर्जन्योपाख्यषोडशदेवैरभिन्यमानप्राण-श्रद्धा-ख-वायु-ज्योतिरप्पृथिवीन्द्रियमनोन्नवीर्यतपोमन्त्रकर्मलोकनामाख्यषोडश-कलः । पञ्चदशाहानि दिवसान् । माशीः न भुङ्क्ष्व कामं यथेष्टमपः पिब । कुतोऽपां पानम् आपोमयः प्राणो न पिबतोऽपिबतो विच्छेत्स्यते छिन्नो भविष्यति हि यतोऽत इति ॥ १ ॥

**स ह पञ्चदशाहानि नाऽशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूꣳषि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति**

**॥ २ ॥**

स एवमुक्तः पुत्रः नाशीत्[1] न भुक्तवान् । अथानन्तरम् एनं पितरमुपससाद ह । भो पितः ! किं ब्रवीमि अधीतमध्ये किं वदामीत्युवाचेति योज्यम् । पिता वक्ति – **ऋच इत्यादि ॥** ब्रूहीत्युवाचेति शेषः । स पुत्र उवाच । भो पितः ! इमा ऋगाद्या न वा नैव प्रतिभान्तीति ॥ २ ॥

**तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात् तेन ततोऽपि न बहु दहेदेवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टा स्यात् तयैतर्हि वेदान् नानुभवस्यशानाथ मे विज्ञास्यसीति ॥ ३ ॥**

तं पुत्रमुवाच पिता । हे सोम्य ! महतोऽभ्याहितस्योपचितस्य वह्निराशेरेकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात् । तेन खद्योतमात्रावशिष्टत्वहेतुना ततस्तादृशाङ्गारादपि बहुवस्तुजातं न दहेद् दग्धं न भवेत् यथा, एवमेव ते तव षोडशानां कलानां एका कलाऽतिशिष्टाऽवशिष्टा स्याद् अभूत् । तया कलया एतर्हि इदानीं वेदान्नानुभवसि । अशान भुङ्क्ष्व ॥ ३ ॥

**स हाऽशाथ हैनमुपससाद तꣳह यत्किञ्च पप्रच्छ सर्वꣳ ह प्रतिपेदे ॥ ४ ॥**

अथ पश्चान्मे मम सकाशाद् विज्ञास्यसीति पितोवाच । स एवमुक्तः पुत्र आशीद्[2] भुक्तवान् । अथानन्तरम् एनं पितरमुपससाद समीपमगात् । तं पुत्रं यत्किञ्चित् पप्रच्छ पिता । तत्पृष्टं सर्वं प्रतिपेदे ज्ञातवान्

---

१.मूले 'न आश' इति पदद्वयं दृश्यते । २.अत्र मूले तावत् 'आश' इति पदं दृश्यते ।

पुत्रः । तं पुत्रं पितोवाच ॥ ४ ॥

**तꣳह होवाच यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्रज्वलयेत् तेन ततोऽपि बहु दहेत् ॥ ५ ॥**

॥ **यथा सोम्येत्यादि** ॥ व्यक्तोऽर्थः । **अभ्याहितस्य**उपचितस्य **तेन** समाहितत्वहेतुना । **ततोऽपि** परिशिष्टादपि ॥ ५ ॥

**एवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत् साऽन्नेनोपसमाहिता प्राज्वालीत् तयैतर्हि वेदाननुभवस्यन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ६ ॥ ७ ॥**

**उपसमाहिता** उपचिता । **तया** षोडश्या कलया । **एतर्हि** इदानीं । व्यतिरेकान्वयाभ्यां मनसोऽन्नमयत्वमुपपाद्य प्राणादेरप्येवमुपपादनं सिद्धं मत्वोपसंहरति – **अन्नमयं हीति** ॥ **तत्** मनआदेः अन्नाद्यंशोपचितत्वं, अन्नदेवताद्यधीनत्वं च, **अस्य** अनेन पुत्रेण । **विजज्ञाविति** ज्ञातमभूदिति वेदपुरुषवाक्यम् । द्विरुक्तिर्विज्ञातमेवेत्यवधारणार्था । यद्वाऽस्य पितुः सकाशाद् **विजज्ञौ** ज्ञातवानेव श्वेतकेतुरिति योजना ॥ ६ ॥

**॥ इति सप्तमः खण्डः ॥**

## अथ अष्टमः खण्डः

*( सुषुप्तिजाग्रदवस्थयोर्जीवः परमात्माधीन इति निरूपणम् )*

**उद्दालको हाऽरुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो**

**भवति स्वमपीतो भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳ ह्यपीतो भवति ॥ १ ॥**

एवं ज्ञानाधिक्येनाऽत्मानमीश्वरं मन्यमानस्य श्वेतकेतोरीश्वरस्य सर्वप्राधान्यं तस्याप्राधान्यं च प्रबोध्य तस्य सुप्त्यादावभेदशङ्कां प्रस्ताव्य तत्रापीश्वराधीनत्वज्ञापनेन परिहरन् भेदमुपदिशतीत्याह श्रुतिः – **उद्दालक इत्यादिना** ॥ उद्दालको नामतः अरुणस्यापत्यं आरुणिः । हे सोम्य स्वप्नस्यान्तं स्वप्नान्तं सुषुप्तिं मे मम सकाशाद् विजानीहि बुध्यस्वेति पुत्रमुवाच । एतत्पुरुषः एष पुरुषो यत्र यदा स्वपिति निद्राति, नाम प्रसिद्धं, तदा सता सन्नाम्ना हरिणा सम्पन्नो भवति । तद् व्यनक्ति – **स्वमिति** ॥ स्वं स्वतन्त्रं हरिं हृदब्जगम् अपीतः इतरैरज्ञेयत्वेनानुप्रविष्टो भवति । कुतः ? हि यस्मात् स्वं स्वतन्त्रहरिम् अपीतः प्राप्तो भवति तस्मादेनं स्वपितीत्याचक्षते जना इत्यर्थः । तदाह सूत्रे – **'तदभावो नाडीषु तच्छ्रुतेरात्मनि ह'** (ब्र.सू.३.२.७) इति । जाग्रत्स्वप्नयोः श्रान्तो जीवः स्वप्नान्तरूपसुषुप्तौ श्रमापनोदाय भगवता स्वान्तर्निवेशितत्वात् तदा केवलं ईश्वराधीनो न स्वतन्त्र इत्युक्तम् ॥ १ ॥

**स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽयतनमलब्ध्वा बन्धनमेवोपाश्रयत एवमेव खलु सोम्यैतन्मनो दिशं दिशं पतित्वाऽन्यत्राऽयतनमलब्ध्वा प्राणमेवोपाश्रयते प्राणबन्धनꣳ हि सोम्य मन इति ॥ २ ॥**

ईश्वराधीनत्वं सदृष्टान्तं व्यनक्ति – **स यथेति** ॥ स प्रसिद्धो दृष्टान्तो यथा – शकुनिः पक्षी सूत्रेण प्रबद्धः दिशं दिशं प्रतिदिशं पतित्वा उत्पत्य अन्यत्र पतितदेशे आयतनं विश्रान्तिकराश्रयम् अलब्ध्वा अप्राप्य **बन्धनमेव** बध्यतेऽत्रेति बन्धनं स्वपादलग्नसूत्रबन्धनशङ्कुमेव

श्रान्तिनिवृत्त्यर्थमुपश्रयते[१] तत्समीप एवाऽस्ते । एवमेव खलु हे सोम्य ! एतन्मनः मनुते अवबुध्यते इति मनोनामैष जीवः प्राणमेव प्रणयनहेतुना प्राणनामकं हरिमेवोपश्रयते । शिष्टं प्राग्वत् । कुतः ? हि यस्मात्, मनो जीवः प्राणबन्धनं प्राणेन बध्यमानस्तस्मादिति । इतिशब्दः सुप्तौ भगवदधीनत्वोक्तिसमाप्तौ ॥ २ ॥

*( जाग्रदवस्थायां जीवः परमात्माधीन इति प्रतिपादनम् )*

**अशनायापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाऽप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितँ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ३ ॥**

जाग्रदवस्थायामपि जीवस्येशाधीनत्वं प्रस्ताव्य बोधयति– **अशनायेति** ॥ अशनाया भोजनेच्छा, पिपासा पानेच्छा । त उभे न जीवाधीने तावदतो यदधीने तद् विजानीहीति पितोवाचेत्यर्थः । कस्मिन्नायत्ते तद् विज्ञापयेति पुत्रेणोक्तः पिता वक्ति – **यत्रेति** ॥ एतत्पुरुषः एष जीवः यत्र यदा अशिशिषति अशितुं भोक्तुमिच्छति तदा अप एव आप एवाबभिमानी प्राण एवान्नेच्छामुत्पाद्य पश्चादशितं भुक्तमन्नं पाकेन तेजःसंयोगेन रसवीर्यादिकरणेन नयन्ते । **'अन्नं रसादिरूपेण प्राणः परिणयत्यसौ'** इत्युक्तेः । अशितनेतृत्वमपां कुत इत्यतोऽशनायाशब्द-वाच्यत्वादिति सदृष्टान्तमाह – **तद् यथेति** ॥ वक्ष्यमाणं निदर्शनं यथा । गां नयतीति गोनायोऽश्वं नयतीत्यश्वनायः पुरुषं नयतीति पुरुषनायो यथा

---

१. मूले तावत् 'उपाश्रयते' इति पदं दृश्यते । 'उपश्रयते' इति खण्डार्थाभिमतः पाठः । ग्रा. कोशे तावत् स एव पाठो दृश्यते ।

एवं तदपस्ता आपः अशं नयन्तीत्यशनायेत्याचक्षते । अबभिमानी च प्राणः तेजोमानिश्रीद्वारा भगवदधीन इति सिद्धमेवेति भावः । **'यत्रैतत्पुरुषः पिपासति नाम'** इत्यादिवाक्यं **'यत्रैतत्पुरुषोऽशिशिषति'** इति वाक्यसमाप्त्यनन्तरं ध्येयम् । योजना च तद्वदेव ध्येया । तेजः तेजोमानिनी श्रीः । सदेव सोम्येत्यादिना हरेर्जगत्कर्तृत्वेन प्राधान्यात् तव तत्सृज्यत्वेना-प्रधानत्वात् तद्भिन्नस्तदधीनोऽसीत्युक्तमर्थं तात्पर्यद्योतनाय पुनराह– **तत्रैतच्छुङ्गमित्यादिना ॥** तत्र भगवतो जगत्कर्तृत्वे । तेन प्राधान्ये च एतत् शुङ्गम् अङ्कुराख्यं कार्यं ज्ञापकमुत्पतितमुत्पन्नं प्राप्तमिति वा सोम्य विजानीहि इदं शुङ्गं जगद्वृक्षाङ्कुरममूलम् अकारणकं न भविष्यति ॥ ३ ॥

**तस्य क्व मूलꣳ स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनाऽपोमूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥**

**अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ५ ॥**

इति हेतोस्तस्यान्नात् पृथिवीमानिनः शिवादन्यत्र अन्यत् क्व किम्मूलं स्यात् । अन्नशब्दितः शिव एव मूलं कर्तेत्यर्थः । अन्नेन च शुङ्गेन कार्येणाब्रूपमूलमन्विच्छ विजानीहीति यावत् ॥ ५ ॥

**तस्य क्व मूलꣳ स्यादन्यत्राद्भ्योऽद्भ्यः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा शुङ्गेन सम्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः यथा तु खलु**

**सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥ ६ ॥**

अद्भ्यः अबभिमानिप्राणात् तेजोरूपं मूलं श्रीतत्वमन्विच्छ । **तेजसा सोम्य शुङ्गेन** सच्छब्दितं मूलं कर्तृ अन्विच्छ । **इमाः प्रजाः सन्मूलाः** सच्छब्दितब्रह्मकर्तृकाः, **सदायतनाः** सत्स्थितिकाः, मुक्तौ **सत्प्रतिष्ठाः** ।

भगवदधीनलक्ष्म्याद्यधीनत्वात् सुतरां भगवदधीनः पुरुष इत्याह – **यथेति** ॥ इमाः श्रीप्राणशिवाख्याः देवताः शरीरादिकर्तृत्वात् लक्ष्म्याद्या ध्येयाः तदीशितृत्वेन भगवांश्चावश्यं मुमुक्षुणा ध्येय इत्यनुसन्धान-कर्तव्यताज्ञापनायोक्तम्– **तदुक्तमित्यादि** ॥ पुरस्तात् पूर्वमेव तदुक्तं भवतीत्यर्थः । मृतिमुक्त्योः परम्परयेशाधीनत्वान्न त्वमीश्वराभिन्न इत्याह – **अस्येत्यादिना** ॥ हे सोम्य ! प्रयतो म्रियमाणस्य मुच्यमानस्य चास्य जीवस्य वाग् वाग्देवी उमा मनसि मनःप्रेरके रुद्रे सम्पद्यते । मनो रुद्रश्च प्राणे, प्राणस्तेजसि श्रीतत्त्वे सम्पद्यत इत्यन्वेति । प्राणस्य तेजसि सम्पत्तिर्द्वारमात्रं न लय इति ज्ञेयम् । तेजः श्रीतत्वं च परस्यां देवतायां सम्पद्यते । पुरुषाः मृत्यादौ वाग्देवीमुमां प्राप्य परम्परया ईश्वरं प्राप्नुवन्तीत्यर्थः ॥ ६ ॥

*( अतत्त्वमसिवाक्यार्थः )*

**स य एषोऽणिमैतदात्म्यमिद९ं सर्वं तत्सत्यं स आत्मा(ऽ) तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ७ ॥ ८ ॥**

सर्वनियामकत्वादिरूपत्वाच्चेश्वरस्य न त्वमीश्वरोऽसीत्याह– स य

**इति** ॥ सारत्वात् सः । नियामकत्वाद् यः । अप्रतिहतसर्वेच्छारूपत्वादेषः । सूक्ष्मज्ञानेन मीयते विषयीक्रियत इत्यणिमा । इदं सर्वम् ऐतदात्म्यम् एष आत्मा स्वामी अस्येत्येतदात्मा । तदेवैतदात्म्यम् । स्वार्थे ष्यञ् । एतत्स्वामिकम् । यद्वा, कर्मधारयात् स्वस्वामिसम्बन्धे ष्यञ्प्रत्ययः । ततत्वात् तत्, परमानन्दरूपत्वात् सत्यम् । स विष्णुरात्मा पूर्णगुणः । त्वमतदसि तद्भिन्नवस्त्वसि श्वेतकेतो इत्युवाच पितेति योज्यम् । **स य** इत्यादिना नियामकतया जीवेषु हरिस्तिष्ठतीत्युक्तम् । **सता सोम्येत्यादिना** सुप्तौ प्राप्य इति चोक्तम् । तर्हि कुतो न दृश्यते तद्वदेति भावेनाऽह पुत्रः – **भूय एवेति** ॥ तथा सोम्येति होवाच पितेत्यर्थः ॥ ७ ॥

॥ इति अष्टमः खण्डः ॥

## अथ नवमः खण्डः

*( जीवब्रह्मभेदविषये पुष्परसदृष्टान्तः )*

**यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाꣳ रसानाꣳ समवहारमेकतां गमयन्ति ॥ १ ॥**

स्वस्मादु भिन्नत्वेनादर्शनान्नास्तीति शङ्कां हेतोः पुष्परसेष्वनैकान्तिकत्वोक्त्या निराह– **यथेति** ॥ मधुकृतो भ्रमराः मधु निस्तिष्ठन्ति निर्ममते । कथम् ? नानात्ययानां नानागतीनामन्योन्यविलक्षणानां वृक्षाणां रसानां समवहारं समूहम् एकतां मिश्रतां गमयन्ति ॥ १ ॥

**ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य**

**न विदुः सति सम्पत्स्यामह इति ॥ २ ॥**

यथा च ते नानावृक्षरसाः तत्र मिश्रतायां विद्यमानमपि विवेकमन्योन्यभेदं न लभन्ते न जानन्ति अमुष्याऽम्रवृक्षस्याहं रसोऽस्मि अयं त्वन्यस्येति । तथाऽन्योऽपि अमुष्य पनसवृक्षस्याहं रसोऽस्म्ययं त्वन्यस्येति । एवमेव खलु सोम्येमाः सर्वाः प्रजाः परमेश्वरशक्तिभिरेव स्वे स्वे शरीरे सति सच्छब्दार्थेश्वरे सम्पद्य तेन मिश्रीभावं प्राप्य सति सम्पत्स्यामहे । उपलक्षणमेतत् । सम्पन्नाः, सम्पद्यामह इति न विदुः ॥२॥

**त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद् भवन्ति तत्तदा भवन्ति ॥ ३ ॥**

इह लोके ते प्रसिद्धाः व्याघ्रो वेत्यादि यद् यद् भवन्ति तत्तदा परमेश्वराश्रितत्वाज्ञानापराधाद् भवन्तीति । एतेन यो यमात्मनो भेदेन न पश्यति स ततो न भिद्यत इति व्याप्तेर्भङ्गो दर्शितो भवति ॥ ३ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा(ऽ)-तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥ ९ ॥**

एवं व्याप्तिं निरस्य स्वतो भिन्नोऽन्यो नियामकोऽस्तीत्युक्तं सूक्तमित्याह – **स य इति** ॥ प्रागिवार्थः ॥ ४ ॥ इति नवमः खण्डः ॥

## अथ दशमः खण्डः

*( जीवब्रह्मभेदविषये नदीसमुद्रदृष्टान्तः )*

**इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र न**

**विदुरियमहमस्मीयमहमस्मीति** ॥ १ ॥

अस्त्वचेतनानां वृक्षरसानामज्ञानं, मया तु, यश्चेतनो यमात्मनो भेदेन न पश्यति स ततो न भिद्यत इति व्याप्यांशे विशेषणं दीयते । अतो न व्याप्तिभङ्ग इत्यभिप्रायेण भूय एवेति पुनः पृष्टे पितोवाच– **इमाः सोम्येत्यादि** ॥ इमाः प्रसिद्धाः गङ्गाद्याः नद्यभिमानिदेवताः प्राच्यः प्रागञ्चनाद् गमनात् प्राचीशब्दवाच्याः पुरस्तात् स्यन्दन्ते स्रवन्ति तथा प्रत्यगञ्चनात् प्रतीचीशब्दवाच्याः पश्चात् स्यन्दन्ते । एवमत्यन्त-विलक्षणास्ताः मेघादिद्वारेण समुद्रादुत्पन्नजलत्वात् समुद्रमेवापियन्ति प्रविशन्ति । तथाऽपि स समुद्र एव भवति । ता नदीदेवताः यथा तत्र समुद्रे । इयं गङ्गाऽहमस्मि, इयं तु यमुना, अयं तु समुद्रः; इत्येवमन्या अपि न विदुः ॥ १ ॥

**एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तत् तदाभवन्ति** ॥ २ ॥

एवमेव खलु सोम्येमा प्रजाः सतः परमेश्वरादागम्योत्पद्यापि सत आगच्छामहे उत्पन्नाः स्मः इति न विदुः । एवमीश्वरे स्थित्वाऽपि तमाश्रिताः स्म इति न विदुः । त इहेत्यादि पूर्ववत् । अनेन चेतनत्व-विशेषितस्यापि व्याप्यत्वाभिमतस्यानैकान्त्यमुक्तं भवति ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत् सत्यꣳ स आत्माऽ-तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच** ॥ ३ ॥ १० ॥

एवं सविशेषणव्याप्तिं च निरस्य स्वतो भिन्नो नियामकोऽन्योऽस्तीत्येतत् सिद्धमेवेत्याह– **स य इति** ॥ ३ ॥

**॥ इति दशमः खण्डः ॥**

**अथ एकादशः खण्डः**

*( 'जीवोऽस्वतन्त्रः' इत्यस्मिन् विषये वृक्षदृष्टान्तः )*

**अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद् यो मध्येऽभ्याहन्याज्जीवन् स्रवेद् योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत् स एष जीवेनाऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥ १ ॥**

अस्त्वीश्वरः स्वतो भिन्नः, तथाऽपि जीवस्य तदधीनत्वं कुतः ? कथं चाहं जानीयाम् ? इत्यभिप्रायवता पुनर्भूय एवेति पृष्टः पिताऽब्रवीत् – **अस्य सोम्येति** ॥ हे सोम्य अस्य महतो वृक्षस्य यः कश्चिन्मूले अभ्याहन्याद् जीवन् जीवेन भगवताऽधिष्ठितश्चेत् स्रवेद् रसमेवोद्गिरेत् न तु म्रियते । एवं यो मध्य इत्यादि । एवं स एष वृक्षजीवः अनेन प्रकृतजीवेनाऽत्मना परमेश्वरेणानुप्रभूतः प्राप्तोऽधिष्ठितदेहः पेपीयमानः पुनः पुनः भृशं वा पिबन् तिष्ठति ॥ १ ॥

**अस्य यदैकां शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच ॥ २ ॥**

अन्वयमुक्त्वा व्यतिरेकमाह – **अस्येति** ॥ अस्य वृक्षस्य यदा एकां शाखां जीवो हरिः जहाति त्यजति अथानन्तरं सा शाखा शुष्यति । यदि द्वितीयां शाखामित्यनुषङ्गः ॥ २ ॥

**जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत् सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ ११ ॥**

एवमेव खलु सोम्य विद्धीत्युक्तं विशदयति– **जीवापेतमिति** ॥ जीवेन हरिणाऽपेतं त्यक्तमिदं प्राणिजातं म्रियते । न जीवो हरिः म्रियते । अनेनेदमुक्तं भवति । यथा वृक्षजीवस्य सदाऽनुपहतात्यक्तदेहेन सुखिनैव स्थातव्यमितीच्छायामपि कदाचिदीश्वरानुग्रहे सति विघातिषु बाह्यकारणेषु सत्स्वप्यवस्थानं भवति । कदाचिदीश्वरानुग्रहाभावे बाह्यकारणबलवत्त्वाभावेऽपि शरीरशोषत्यागाद्यनिष्टं भवति । एवं मानुषशरीरेऽपि जीवस्येशाधीनत्वं ज्ञातव्यमिति । एवं स्वतोऽन्यं जीवनियन्तारं वृक्षदृष्टान्तेन विज्ञाप्य **स य** इत्यादिना यत् प्रागुक्तं तत् सुस्थमित्याह– **स य इति** ॥ ३ ॥

॥ इति एकादशः खण्डः ॥

## अथ द्वादशः खण्डः

*( परमात्मनोऽप्रत्यक्षत्वविषये वटबीजदृष्टान्तः )*

**न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति ॥ १ ॥**

एवं जीवस्य सत्तादिप्रदः परमात्मैव शरीरे वर्तमानोऽपि जीवेन कुतो न दृश्यते । सौक्ष्म्यादिति चेन्न । वालाग्रशतभागस्यापि जीवात्मनः स्वस्य सूक्ष्मस्य दर्शनादिति भावेन भूय एवेति पृष्टः पितोवाच – **न्यग्रोधेति** ॥

अतः पुरःस्थिताद् वृक्षात् न्यग्रोधफलं वटफलमाहरेत्युवाच पिता । आहृत्येदं न्यग्रोधफलमाहृतं भगवः ! इति पुत्र उवाच । इदं फलं भिन्धीति पिता । तद् भित्वा भिन्नं फलमिति पुत्रः । अत्र भिन्ने फले किं पश्यसीति पिता । अण्व्य इवेमाः सूक्ष्मा धाना बीजानि पश्यामीति पुत्रः । हे अङ्ग ! आसां धानानां मध्ये एकां धानां भिन्धीति पिता । भित्त्वा भिन्नेति पुत्रः । अत्र भिन्नायां धानायां किं पश्यसीति पिता । किञ्चन न पश्यामीति पुत्रः ॥ १ ॥

**तँ होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान् न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति ॥ २ ॥**

**स य एषोऽणिमैतदात्म्यमिदँ सर्वं तत् सत्यँ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १२ ॥**

एवमुक्तवन्तमुवाच पिता । यमेतमणिमानं भावभवित्रोरभेदात् परमसूक्ष्मं परमात्मानं न निभालयसे न पश्यसि । अस्याणिम्नः सूक्ष्मभगवतः सामर्थ्याद् एवं परिदृश्यमानप्रकारेण महान् न्यग्रोधस्तिष्ठति । श्रद्धत्स्व विश्वासं कुरु, सोम्येति पिता । अत्र, वृक्षः, प्रपञ्चः, फलं, शरीरं, धानाः, जीवाः, तत्र यथा सूक्ष्मे वटबीजे दृश्यमानेऽपि यत्प्रभावाद् वृक्षावस्थानं स बीजान्तर्गतो हरिः परमसूक्ष्मत्वान्न दृश्यते, तथा जीवादपि सूक्ष्मत्वात् तदन्तर्गत [१] इत्युक्तं भवति । अतो यदुक्तं नियन्ताऽन्योऽस्तीति तत् सुस्थमित्याह – **स य इति** ॥ २-३ ॥

**॥ इति द्वादशः खण्डः ॥**

१. न दृश्यत इति योज्यम् ।

## अथ त्रयोदशः खण्डः

*( 'परमात्मनः कार्यं प्रत्यक्षम्' इति विषये लवणोदकदृष्टान्तः )*

**लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तᳪ होवाच यद्दोषा लवणमुदकेऽवधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ॥ १ ॥**

वटावस्थानादिकार्येणेश्वरसामर्थ्ये दृश्यमानेऽपि तस्यादर्शनमित्येतत् कथमहं जानीयामिति भावेन भूय एवेति प्रार्थितः पितोवाच– **लवण-मित्यादि** ॥ एतल्लवणखण्डं कुम्भोदके दोषा रात्रौ अवधाय निक्षिप्याथानन्तरं प्रातः मा माम् उपसीदथाः प्राप्नुयाः इत्युवाच पितेत्यर्थः । यद् यथा पित्रोक्तं तत् तथा चकार ह पुत्रः । तं प्रातः समीपमागतं पुत्रमुवाच ह पिता । किमिति ? दोषा रात्रौ यल्लवणमुदकेऽवधाः अवाधाः निक्षिप्तवानसि हे अङ्ग तदाहरेति । तत्कुम्भमानीय तन्मध्ये हस्तं स्थापयित्वा अवमृश्य परामृश्य न विवेद नापश्यत् । विलीनमेव अत्यन्तं नष्टं वस्तु यथा न दृश्यते तथा न विवेदेत्यन्वयः ॥ १ ॥

**यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्त्यादाचामेति कथमिति लवणमित्यभिप्रास्यैतदथ मोपसीदथा इति तद्ध तथा चकार तच्छश्वत् संवर्तते तᳪ होवाचात्र वाव किल सत् सोम्यैत-मणिमानं न निभालयसेऽत्रैव किलेति ॥ २ ॥**

हे अङ्ग अस्योदकस्यान्तात् पूर्वदिगवस्थितादवयवादुद्धृत्यैकदेश-माचामेति पिता । आचान्तवन्तं पुत्रं प्रति कथमिति पप्रच्छ । **लवणं**

लवणरसोपेतमिति पुत्रोऽब्रवीत् । एवं मध्यात् मध्यभागादन्त्यात् पश्चिमदिगवस्थिताच्चोद्धृत्याऽचामेत्यादिप्रश्नप्रतिवचने ध्येये । एतदुदकमभिप्रास्य निरवास्य मामुपसीदथाः इति पिता । तद्ध तथा चकार पुत्रः । तल्लवणं कुत्र गतमिति जिज्ञासायां वेदपुरुषः स्वयमाह – **तदिति** ॥ तल्लवणं शश्वत् साकल्येनोदक एव संवर्तते । नापगतमिति । तत्त्वनिर्णयटीकायां तु तद्ध तथा चकारेति वाक्यं शश्वद् अङ्ग तदाहरेत्यनन्तरं संवर्तते, अनुवर्तनीयमिति वार्थ इत्युक्तम् । तं होवाच पिता – **अत्र वावेति** ॥ एतमणिमानं सूक्ष्मलवणं यत्र न निभालयसे तल्लवणमत्रैवोदके सद् विद्यमानं किल । अत्रैव किलेति पुनरुक्तिरादरार्था। अनेन लवणगुणे रसे दृश्यमानेऽपि लवणं न दृश्यते तथा हरेः सामर्थ्ये दृश्यमानेऽपि न भगवानित्युक्तं भवति ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिद९ सर्वं तत् सत्य९ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १३ ॥**

एवं पुत्रशङ्कितानुपपत्तिं परिहृत्य त्वदन्यो नियामकोऽस्तीत्युक्तं सूक्तमित्याह – **स य इति** ॥ एवम्भूतो हरिरविद्यापटलपिहितनयनेन कथं दृश्यते प्राप्यते चेति तमुपायं वक्तुं प्रार्थयते – **भूय एवेति** ॥ ३ ॥

**॥ इति त्रयोदशः खण्डः ॥**

## अथ चतुर्दशः खण्डः

*( गुरूपदेशादेव भगवत्प्राप्तिः )*

**यथा सोम्य पुरुषं गन्धारभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत् स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्राध्मायीताभि-**

**नद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥ १ ॥**

गुरूपदेशस्तद्दर्शनप्राप्त्योर्हेतुरिति सदृष्टान्तमाह पिता– **यथा सोम्येति** ॥ हे सोम्य ! पुरुषं धनिकं गन्धारसञ्ज्ञकेभ्यो जनपदेभ्यः अभिनद्धाक्षं 'णह बन्धने' बद्धाक्षम् । अक्षिणी बद्ध्वेति यावत् । ततोऽनन्तरम् आनीय अतिजने जनरहिते अरण्ये विसृजेच्चोरः । स यथा तत्रारण्ये अभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्ट इति प्राङ् चोदङ् वाऽधराङ् वा प्रागादिदिगभिमुखो भूत्वेति यावत् । प्राध्मायीत 'ध्मा शब्दाग्निसंयोगयोः' उच्चैर्ब्रूयात् ॥ १ ॥

**तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैवमेवेहाऽचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यत इति ॥ २ ॥**

यथा कश्चित् कृपावान् तद्वाक्यं सम्यक् श्रुत्वा तस्याभिनहनं बन्धनं प्रमुच्य ब्रूयाद् एतां दिशम् अस्यां दिशि गन्धारा जनपदाः सन्ति एतां दिशं व्रजेति । स एवमुक्तः पुरुषः तदुपदिष्टाद् ग्रामान्निर्गत्यापरं ग्रामं पृच्छन् पण्डितः प्राज्ञो मेधावी स्मृतिमान् गन्धारानेवोपसम्पद्येत एवमेवानाद्य-विद्यादिभिराच्छादितनिजज्ञानो जीवः संसारे पतितः परमेश्वराद् जात-जिज्ञासो गुरूपदेशं लब्ध्वा क्रमापन्नानि श्रवणादीनि साधनान्यनुष्ठाय स्वजन्मभूमिं भगवन्तं पश्यतीति भावेनोक्तम् – **आचार्यवान् पुरुषो वेदेति** ॥ तस्य भगवद्वेदिनो यावन्न विमोक्ष्ये प्रारब्धकर्मणो न विमोक्ष्यते, तावदेव चिरं विलम्बो ब्रह्मप्राप्तौ । अथ भोगेन प्रारब्धक्षयानन्तरं सम्पत्स्यते ब्रह्म प्राप्नोति चेति ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳसर्वं तत् सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १४ ॥**

दर्शनादिप्राप्तिहेतुमुक्त्वा प्रागुक्तं नियामकाद्धरेर्भिन्नो जीव इति सुस्थमित्याह– **स य इति** ॥ जीवस्यास्वातन्त्र्यं वृक्षदेहे अवगतं मानुषदेह एव बोधयेति प्रार्थयते– **भूय एवेति** ॥ ३ ॥

**॥ इति चतुर्दशः खण्डः ॥**

**अथ पञ्चदशः खण्डः**

*( मनुष्यस्यास्वातन्त्र्यविषये मरणावस्थानिदर्शनम् )*

**पुरुषꣳ सोम्योपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥**

तत्पृष्टमन्वयव्यतिरेकाभ्यां बोधयति – **पुरुषमिति** ॥ हे **सोम्य** ! **उपतापिनं** रोगिणं **ज्ञातयो** बान्धवाः **पर्युपासते** परित उपविशन्ति । कथम् ? **जानासि मां जानासि मामिति** वदन्तः । **तस्योपतापिनः यावद् वाग्** उमा **मनसि** रुद्रे **न सम्पद्यते** मुक्तव्यापारा सती न रुद्रे तिष्ठतीति यावत् । एवमग्रेऽपि । मनः रुद्रः प्राणे न सम्पद्यते, प्राणस्तेजसि श्रीतत्वे न सम्पद्यते , तेजः परस्यां देवतायां न सम्पद्यते तावज्जानाति ॥ १ ॥

**अथ यदाऽस्य वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥ २ ॥**

अथ अनन्तरं [१] यदाऽस्योपतापिनः । **अथ** तदा । **न** जानाति ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

एवं जीवस्य मानुषदेहेऽपि परम्परया ईशाधीनत्वं स्पष्टं प्रबोध्य यदुक्तं नियम्याद् भिन्नत्वं तस्य स य इत्यादिना तत् सुस्थमित्याह – **स य इत्यादिना** ॥ एवं सर्वप्रेरकं भगवन्तमात्मनो भेदेन यो जानाति, यश्च सोऽहमस्मीत्यभेदेन जानाति तयोः कीदृशं फलमिति भावेनाऽऽह – **भूय एवेति** ॥३ ॥

**॥ इति पञ्चदशः खण्डः ॥**

**अथ षोडशः खण्डः**

*( अभेदज्ञानस्यानर्थकारित्वे चोरदृष्टान्तः )*

**पुरुषꣳ सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनाऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ॥ १ ॥**

द्वयोरपि फलं दृष्टान्तेनाऽऽह – **पुरुषमिति** ॥ राजद्रव्येऽपगते शङ्कास्पदं पुरुषमानयन्ति राजभटाः । कथम् ? अयमपहार्षीत् स्तेयमकार्षीदिति वदन्त इति शेषः । पश्यतोहरत्वमपहारः, अन्यत् स्तेयम् ।

१. 'अर्थान्तरम्' इति मुद्रितपुस्तके । श.कोशे अनन्तरमिति पाठो दृश्यते । स एवात्राऽऽदृतः ।

ततश्चोरेणेदं मया न कृतमित्युक्ते, भटान् प्रति राजा वक्ति । परशुमस्मै अस्य परीक्षार्थं तपतेति । परशुं तप्तमस्य हस्ते दत्तेति यावत् । स पुरुषो यदि तस्यापहारादेः कर्ता भवति नेति च ब्रूते, तत एव कर्ता सन्नपि नेति वदतीति हेतोरेवाऽत्मानमनृतमसत्यं कुरुते । सोऽनृताभिसन्धः, अनृते अभिसन्धो बुद्धिर्यस्य सोऽनृताभिसन्धः अनृतेनासत्यवचनेनाऽत्मानमन्तर्धायाऽच्छाद्य तप्तं परशुं प्रतिगृह्णाति । स दह्यते । अथानन्तरं स हन्यते राजभटैः ॥ १ ॥

**अथ स यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनाऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ॥ २ ॥**

अथ यदि तस्येत्यादि व्यक्तम् । स यथा तत्र न दह्यते, एवमेव भगवतः भेदज्ञानी न दह्यते । न हन्यते मुच्यते चेत्यर्थः ॥ २ ॥

**स यथा तत्र न दह्यत एतदात्म्यमिदꣳ सर्वं तत् सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति तद्धास्य विजज्ञाविति ॥ ३ ॥ १६ ॥**

**॥ इति श्रीमच्छान्दोग्योपनिषदि षष्ठोऽध्यायः ॥**

तथाऽभेदज्ञानी च चोरत्वादेव दह्यते, हन्यते , अन्धे तमसि पात्यते । तथा च प्रागुक्तं सुस्थमित्याह– **स य इति** ॥ अस्य पितुः सकाशात् तत्पित्रोक्तं सर्वं विजज्ञौ ज्ञातवान् पुत्र इति श्रुतिवाक्यम् । द्विरुक्तिरवधारणार्था ॥ ३ ॥ १६ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते षष्ठोऽध्यायः ॥

## ॥ अथ श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते सप्तमाध्याये प्रथमः खण्डः ॥

*( सनत्कुमारसविधे नारदागमनम् )*

**ॐ अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तꣳ होवाच यद् वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच ॥ १ ॥**

पूर्वाध्याये प्रज्ञाधिक्येनाऽत्मानमीश्वरम्मन्यमानं श्वेतकेतुं प्रति भेददृष्टान्तैर्भेदज्ञानपूर्वमीश्वरोपासना कार्येत्युक्तम् । अत्र पुनरध्याये तारतम्यज्ञानपूर्वं तदन्तर्गतत्वेनोपासितो हरिर्मोक्षादिसर्वपुमर्थप्रद इत्यतो देवानां तारतम्यमाह – **अधीहीत्यादिना** ॥ नारदः, हे भगवः! भगवन् अधीहि मामध्यापयेति ब्रुवन् सनत्कुमारमुपससाद उपसत्तिमगात् । तं नारदमुवाच ह सनत्कुमारः । किमिति? अज्ञातांशस्यैवोपदेष्टव्यत्वाद् ज्ञातं भागं वदेत्युवाचेत्याह – **यद्वेत्थेति** ॥ तेन वेदितकथनेन मामुपसीद । ततो ज्ञाताद् ऊर्ध्वम् अज्ञातांशं वक्ष्यामीत्युवाचेत्यन्वयः ॥ १ ॥

*(नारदाधीतशास्त्रवर्णनम् )*

**ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहास-पुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद् भगवोऽध्येमि ॥ २ ॥**

स इत्युक्तो नारद उवाच ह । तदाह – **ऋग्वेदमिति** ॥ हे भगवः! भगवन् सनत्कुमार! इतिहासपुराणमिति द्वन्द्वैकवद्भावः । वेदानाम् ऋगादीनां पञ्चमं पञ्चत्वसङ्ख्यापूरकम् इतिहासपुराणरूपं वेदम्,

अध्येमीति सर्वत्रान्वेति । पित्र्यं पितृलक्षणोक्तिपरग्रन्थं, राशिं गणनशास्त्रं, देवलक्षणपरं दैवम्, निधिं 'निक्षेप एतादृशे स्थले तिष्ठति' इति तच्चिह्नोपदर्शनपरं शास्त्रं, वाकोवाक्यं मूलवेदम्, एकायनं वेदसारसङ्ग्रहशब्दितं पञ्चरात्रं, समयपादान्त्यसुधायाम् 'एकायनं पञ्चरात्रम्' इत्युक्तेः । देवैर्ज्ञेया विद्या देवविद्या ताम्, ब्रह्मविद्याम् आरण्यकं, भूतनिह्नपरं शास्त्रं भूतविद्यां, क्षत्रविद्यां नीतिशास्त्रं, नक्षत्रविद्यां ज्योतिःशास्त्रं, सर्पलक्षणशास्त्रं सर्पविद्यां, देवजनविद्यां देवपरिवारप्रतिपादकं शास्त्रम् एतद्विद्याजातमध्येमि ॥ २ ॥

**सोऽहं भगवो मन्त्रविदेवास्मि नात्मविच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तन्मा भगवान् शोकस्य पारं तारयत्विति तꣳ होवाच यद्वै किञ्चैतदध्यगीष्ठा नामैवैतत्** ॥ ३ ॥

किं तर्हि त्वया ज्ञातव्यमित्यत आह – **स इति** ॥ एतावदध्येताऽप्यहं हे भगवः! मन्त्रविदेव निर्णेतव्यभगवद्गुणप्रतिपादकशब्दराशिज्ञ एवास्मि । नाऽत्मवित् निर्णायकोपक्रमादिन्यायैर्ऋगादिशब्दराशेरर्थं निर्णीय आत्म-शब्दितभगवन्तं न ज्ञातवान् । किमात्मवेदनेन कृत्यमित्यत आह – **श्रुतं हीति** ॥ भगवद्दृशेभ्यः युष्मत्तुल्येभ्यः महानुभावेभ्यः आत्मविदेव शोकं तरतीति मे मया श्रुतं हि, यतोऽतः हे भगवः शोचामि दुःखमनुभवामि । तं तादृशं मां भगवान् पूज्यो भवान् शोकस्य पारं तारयत्वित्युवाच नारद इत्यन्वयः । तमेवं वक्तारं नारदमुवाच कुमारः । किं तदित्यत आह– **यदिति** ॥ हे नारद त्वं यत्किञ्चिद् ऋगादिकमध्यगीष्ठाः अधीतवानभूः । एतद् ग्रन्थजातं नामैव भगवद्गुणराशिप्रतिपादकनामधेयमेव वै प्रसिद्धम् ॥ ३ ॥

*( नामाभिमानिन्यामुषोदेव्यां भगवदुपासनम् )*

**नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेव-जनविद्या नामैवैतन्नामोपास्वेति ॥ ४ ॥**

तत्किमित्यतः प्रागुक्तं सर्वमनुवदति – **नाम वा ऋग्वेद इति** ॥ नाम वा इति पदं सर्वत्रान्वेति । भगवन्नामत्वं दृढीकर्तुं अन्तेऽप्यवधारयति– **नामैवैतदिति** ॥ तदाह सूत्रे **'सञ्ज्ञातश्चेत् तदुक्तमस्ति तु तदपि'** (ब्र.सू.३.३.१९) इति । यद्वा, एतत् नामैव अमेया अज्ञेया न भवति । किन्तूषःकालमानित्वादुषसि ज्ञायत इति नामाख्यया उषोदेव्याऽभिमन्य-मानमेतद् ग्रन्थजातमित्यर्थः । तर्हि किं कार्यमित्यत आह – **नामेति** ॥ नाम्नि उषोदेव्यां ब्रह्मास्तीत्युपास्स्व । इति तमुवाचेत्यन्वयः । तदाह सूत्रे **'न प्रतीके न हि सः'** (ब्र.सू.४.२.४) इति ॥ ४ ॥

**स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ५ ॥ १ ॥**

फलमाह – **स य इति** ॥ स प्रसिद्धो योऽधिकारी नाम ब्रह्मेति नाम्नि ब्रह्मास्तीत्युपास्ते, अस्योपासकस्य यावन्नाम्नः उषोदेव्याः गतं व्याप्तिः, तत्र तावति देशे यथाकामचारो भवति । यो नामेति पुनरुक्तिरादरार्था । नाम्नो नामाभिमानिन्या उषसः सकाशाद् भूयः श्रेष्ठं वस्त्वस्ति किमिति प्रश्नस्योत्तरमाह कुमारः – **नाम्नो वावेति** ॥ तन्मे ब्रवीत्विति नारदः । अत्र नाम्नः पूर्वं कर्मभूमिमानिनौ क्रमान्नीचोच्चौ पुष्करशनैश्चरौ ग्राह्यौ ॥ ५ ॥ **इति प्रथमः खण्डः ॥**

## अथ द्वितीयः खण्डः

*( नामाभिमान्युषोदेव्याः सकाशाद् वागभिमानिस्वाहादेव्याः उत्तमत्वकथनम् )*

**वाग् वाव नाम्नो भूयसी वाग् वा ऋग्वेदं विज्ञापयति यजुर्वेद९ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या९ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽकाशं चाऽपश्च तेजश्च देवा९श्च मनुष्या९श्च पशू९श्च वया९सि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ् नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत् सर्वं विज्ञापयति वाचमुपास्स्वेति ॥ १ ॥**

वाग् वाव वागभिमानिनी स्वाहादेव्येव नाम्नो नामाभिमानिन्या अश्विपत्न्या उषोदेव्याः भूयसी धर्मज्ञानादिसर्वगुणैः श्रेष्ठा। सा चाग्निभार्या। वं वसुं अञ्चति गच्छतीति वसुनामकाग्न्यञ्चनहेतुना वागित्युक्ता। वाग्देव्या माहात्म्यमाह – **वाग् वावा इति** ॥ वाग्देवी स्वाहाख्या ऋग्वेदं विज्ञापयति वै। वागिन्द्रियदेवताप्रसादेन हि गुरूच्चारणानूच्चारणादिना ऋग्वेदादिकं जानाति जीव इत्यर्थः। श्वापदानि आरण्यजन्तुविशेषः। आकीटपतङ्गपिपीलिकं कीटपतङ्गपिपीलिकापर्यन्तम्। हृदयज्ञं हृद्ययते वर्तते– इति हृदयं ब्रह्म, तज्जानातीति तज्ज्ञं भगवत्तत्त्वज्ञम्। अहृदयज्ञं

ब्रह्मेतरवस्तुज्ञं च वाग् विज्ञापयतीति सर्वत्रान्वेति । अन्वयमुक्त्वा व्यतिरेकमाह – **यद्वै वाङ् नाभविष्यदिति** ॥ यद् यदि वाङ् नाभविष्यत् तर्हि धर्मादि कोऽपि न व्यज्ञापयिष्यद् विज्ञातो न भवेत् । व्यज्ञापयिष्यदिति न सत्यमित्यादौ सर्वत्रान्वेति । निर्धारयति – **वागेवेति** ॥ वाचमुपास्स्वेति द्वितीया सप्तम्यर्थे । वाचि वाग्देव्यां ब्रह्मास्तीत्युपास्स्वेत्यर्थः ॥ १ ॥

**स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ २ ॥**

स य इत्यादि प्राग्वत् । अत्र नाम्नः उच्चः, वाचो नीचो जलमानी बुधो मध्ये ग्राह्यः ॥ २ ॥ **इति द्वितीयः खण्डः ॥**

## अथ तृतीयः खण्डः

*( वागभिमानिस्वाहादेव्याः सकाशान्मनोऽभिमानि-*

*पर्जन्यस्योत्तमत्वकथनम् )*

**मनो वाव वाचो भूयो यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीयेत्यथ कुरुते पशूꣳश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छे मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति ॥ १ ॥**

वृष्ट्यादिनाऽङ्कुरादिनिर्माणहेतुना मनःशब्दोक्तः पर्जन्यः वाचो वाग्देव्याः स्वाहातः भूयो वाव प्रसिद्धम् । मनसो भूयस्त्वं दृष्टान्तपूर्वं

व्यनक्ति – **यथेति** ।। द्वे आमलके धात्रीफले द्वे वा कोले क्रमुकफले । द्वौ वा अक्षौ विभीतकाक्षौ । मुष्टिरनुभवति स्वान्तर्भावयति यथा । एवं वाचं वाग्देवीं, नाम च नामदेवीम् उषसं, मनो मनःशब्दितः पर्जन्यः अनुभवति स्वसामर्थ्ये अन्तर्भावयति स्वाधीनतया करोतीति यावत् । स मनस्वी पुमान् । मनसा मनस्यति आलोचयति । किमिति? मन्त्रानधीयीयेति मन्त्राध्ययनं करवाणीति । अथानन्तरमधीते । मनसा मनस्यतीत्येतत् कर्माणि कुर्वीयेत्याद्युत्तरवाक्यत्रयेऽप्यन्वेति । आत्मनो मनोधीनप्रवृत्ति-कत्वान्मनो ह्यात्मा । उक्तदिशा मनोऽधीनत्वान्मनो हि लोकः । मनो ब्रह्म । मनसि सान्निध्यविशेषात् मन उपास्स्व मनसि पर्जन्ये ब्रह्मास्तीत्युपास्स्वेत्यर्थः ।। १ ।।

**स यो मनो ब्रह्मेत्युपास्ते स यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। २ ।। ३ ।।**

**स य** इत्यादि प्राग्वत् । मनसो गतं पर्जन्यस्य यावद्देशे व्याप्तिरित्यर्थः । अत्र पर्जन्यवाचकमनःशब्देन वरुणानी सञ्ज्ञा रोहिणी धार्मी विराट् चेति तत्समानाः पञ्च देव्यो ग्राह्याः ।। २ ।। ३ ।।

**।। इति तृतीयः खण्डः ।।**

## अथ चतुर्थः खण्डः

*( मनोऽभिमानिपर्जन्यात् सङ्कल्पाभिमानिमित्रस्य श्रैष्ठ्यनिरूपणम् )*

**सङ्कल्पो वाव मनसो भूयान् यदा वै सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ।। १ ।।**

**सङ्कल्प इति ॥** अह्नि सङ्कल्पहेतुतया सङ्कल्पनामा मित्रदेवः मनसः मनःशब्दोपात्तपर्जन्यात् तत्समेभ्यश्चेत्यर्थः । एतच्चोपलक्षणम् । रैवत-प्रभृत्येकादशमनुच्यवनोचथ्यवैन्यशशबिन्दुहैहयप्रियव्रतगयानुक्तशतस्थ-देवादयश्च पर्जन्यादिभ्यः षड्भ्यो भूयांसः । तेभ्यश्चाश्विविघ्नेश-वित्तपविष्वक्सेना भूयांसः । तेभ्यः सङ्कल्पनामा मित्रो भूयानित्यर्थः । सङ्कल्पशब्दितमित्रग्रहणेन च निर्ऋतिर्बृहस्पतिभार्या तारा, प्रावही चेति तिस्रो देवतास्तत्समाना ग्राह्याः । यदा पुमान् सङ्कल्पाख्यमित्रेण प्रेरितः सङ्कल्पयते मननादिकं करोमीति सङ्कल्पं करोति । अथानन्तरं मनस्यति मनः प्रेरयति । अथानन्तरं वाचं वागिन्द्रियमीरयति सव्यापारं करोति । तां नाम्नि भगवन्नामभूते शब्दराशिविषये ईरयति प्रेरयति भगवन्नाम-भूतशब्दराशिमुच्चारयति । नाम्नि शब्दराशौ मन्त्रा एकीभवन्ति । अन्तर्भवन्ति एकार्थका भवन्ति । मन्त्रेषु कर्माणि एकं भवन्तीत्यनुषङ्गः । तत्र प्रतिपाद्यानि भवन्तीत्यर्थः ॥ १ ॥

**तानि ह वा एतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाऽकाशश्च समकल्पन्ताऽपश्च तेजश्च तेषां सङ्क्लृप्त्यै वर्षꣳ सङ्कल्पते वर्षस्य सङ्क्लृप्त्या अन्नꣳ सङ्कल्पतेऽन्नस्य सङ्क्लृप्त्यै प्राणाः सङ्कल्पन्ते प्राणानाꣳ सङ्क्लृप्त्यै मन्त्राः सङ्कल्पन्ते मन्त्राणां सङ्क्लृप्त्यै कर्माणि सङ्कल्पन्ते कर्मणाꣳ सङ्क्लृप्त्यै लोकाः सङ्कल्पन्ते लोकानां सङ्क्लृप्त्यै सर्वं सङ्कल्पते स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति ॥ २ ॥**

तानि हवा एतानि मनोवाङ्नाममन्त्रकर्माणि तदभिमानिनः

पर्जन्यादयश्च प्रागुक्ताः सङ्कल्पैकायनानि सङ्कल्पाख्यमित्राधीनानि । अत एव सङ्कल्पात्मकानि, मित्रात्मकानि वोच्यन्ते, सङ्कल्पे मित्रे प्रतिष्ठितानि मुक्तौ । मुक्तावपि तदधीनानीति यावत् । न केवलमेतावत्, सङ्कल्पादेव च द्यावाभूम्याद्युत्पत्तिरपीत्याह – **समक्लृपतामिति** ॥ समकल्पेताम् अजाये-तामित्यर्थः । समकल्पन्त अजायन्त । तेषां द्यावापृथिव्यादीनां सङ्क्लृप्त्यै सङ्क्लृप्त्या एव । एवमग्रेऽपि । सङ्कल्पते उत्पद्यते । प्राणाः सङ्कल्पन्ते उपचीयन्ते । अत्र द्यावापृथिव्यादयो जडाश्चेतनाश्च । जडानां सङ्क्लृप्तिः सङ्कल्पाख्यमित्रात्, चेतनानां सङ्क्लृप्तिर्वाय्वादित इति विवेकः । उपसंहरति – **स इति** ॥ स सङ्कल्पो मित्रः एष एतादृश इत्यर्थः । सङ्कल्पमुपास्स्व मित्रे तत्समानेषु च ब्रह्मोपास्स्वेत्यर्थः ॥ २ ॥

**स यः सङ्कल्पं ब्रह्मेत्युपास्ते क्लृप्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति यावत्सङ्कल्पस्य गतं तत्रास्य यथाकामचारो भवति यः सङ्कल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः सङ्कल्पाद् भूय इति सङ्कल्पाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥ ४ ॥**

**क्लृप्तान्** सङ्कल्पाधिष्ठितान् **ध्रुवान्** प्रतिष्ठितान्, **अव्यथमानान्** व्यथाशून्यान् लोकान् **ध्रुवः** प्रतिष्ठितोऽ**व्यथमानः अभिसिद्ध्यति** प्राप्नोति, **सङ्कल्पस्य** मित्रस्य **यावद्गतं** यावती व्याप्तिः । **सङ्कल्पात्** मित्रात् तत्समानदेवेभ्यश्च भूयोऽस्ति किमित्यर्थः ॥ ३ ॥

॥ इति चतुर्थः खण्डः ॥

## अथ पञ्चमः खण्डः

*( सङ्कल्पाभिमानिमित्राच्चित्ताभिमान्यग्नेरुत्तमत्वनिरूपणम् )*

**चित्तं वाव सङ्कल्पाद् भूयो यदा वै चेतयतेऽथ सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥**

चित्तम् अस्थिरस्मृतिरूपचित्तमानी होमकुण्डे चितत्वहेतुना चित्त-नामाऽग्निः तत्समानौ भृगुप्रसूती[१] चेति देवतात्रयं सङ्कल्पात् मित्रात् तत्समेभ्यो निर्ऋतिताराप्रावहीरूपदेवेभ्यश्च भूयः श्रेष्ठम् । उपलक्षणमेतत् । मरीच्यत्र्यङ्गिरःपुलस्त्यपुलहक्रतुवसिष्ठविश्वामित्रवैवस्वतमनुभ्यो मित्रादि-देवचतुष्टयादुत्तमेभ्योऽपि भूय इति ज्ञेयम् । वावेत्यवधारणे । यदा पुमान् चित्तमानिप्रेरितश्चेतयते कर्तव्याकर्तव्यं जानाति । अथानन्तरं सङ्कल्पते 'इदं कर्म करोमि' इत्यादिरूपेण सङ्कल्पं मनोवृत्तिविशेषं करोति । अथ मनस्यति मनः प्रेरयति । शिष्टं प्राग्वत् ॥ १ ॥

**तानि हवा एतानि चित्तैकायनानि चित्तात्मकानि चित्ते प्रतिष्ठितानि तस्माद् यद्यपि बहुविदचित्तो भवति नायमस्ती-त्येवैनमाहुर्यदयं वेद यद्वा अयं विद्वान् नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान् भवति तस्मा एवोत शुश्रूषन्ते चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ॥ २ ॥**

तानि हवा एतानि चेतनाचेतनरूपसङ्कल्पादीनि चित्तैकायनानि अग्निभृगुप्रसूतिरूपदेवतात्रयाधीनानि । चित्तात्मकानि चित्तप्रधानानि

---

१.प्रसूतिस्तु दक्षप्रजापतिभार्या ।

तस्मात् सङ्कल्पादेश्चित्ताधीनत्वाद् यद् यदि । बहुविदपि बहुज्ञोऽपि अचित्तः स्मरणहीनश्चेद् भवति । एनमनुभूतमस्मरन्तं पुरुषम् अयं नास्तीत्याहुः । अविद्यमानप्रायमेवाऽहुर्जनाः । पुनर्जनोक्तिप्रकारमाह – **यदिति** ॥ यद् यदि अयं वेद सामान्यतो जानाति, यदि वा विद्वान् विशेषतो जानीयात्, तर्हि इत्थमचित्तः स्मरणहीनः न स्यादिति चाऽहुरित्यर्थः । अथेत्यर्थान्तरे । यद्यल्पविदपि चित्तवान् स्मृतिमान् भवति । तस्मात् पुरुषात् । एतत् स्वस्वाभिमतं प्रमेयं शुश्रूषन्ते श्रोतुमिच्छन्ति जनाः । उपसंहरति– चित्तं ह्येकायनं चित्तमानित्रयं मुख्याश्रयः, सङ्कल्पमनःप्रभृतेरित्यर्थः । चित्ताधीनसङ्कल्पादिमत्त्वादात्मा चेतनश्चित्तमित्युच्यते । चित्तं प्रतिष्ठा मुक्तावाश्रयः । चित्तमुपास्स्वेति अग्न्यादित्रये ब्रह्मोपास्स्वेत्यर्थः ॥ २ ॥

**स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद् भूय इति चित्ताद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥ ५ ॥**

**चित्तान्** लोकान्, अग्न्याद्यधिष्ठितान् लोकान् । शिष्टं व्यक्तम् ॥ **चित्ताद्वावेति** ॥ अग्निभृगुप्रसूतिभ्यः भूयोऽस्ति किमित्यर्थः ॥ ३ ॥ ५ ॥

**॥ इति पञ्चमः खण्डः ॥**

**अथ षष्ठः खण्डः**

*( चित्ताभिमान्यग्नेर्ध्यानाभिमानिवरुणस्याऽधिक्यकथनम् )*

**ध्यानं वाव चित्ताद् भूयो ध्यायतीव पृथिवी ध्यायतीव**

**द्यौर्ध्यायतीवान्तरिक्षं ध्यायन्तीवाऽपो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्यास्तस्माद् य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादाꣳशा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादाꣳशा इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥ १ ॥**

॥ **ध्यानमिति** ॥ ध्यानमानी सत्यानृतविवेचनार्थं ब्रह्मणा निहितत्व-हेतुना ध्याननामा वरुणः चित्तात् चित्तशब्दिताग्निभृगुप्रसूतिरूप-देवता-त्रयाद् भूयः श्रेष्ठः । उपलक्षणमिदम् । अग्न्यादित्रयादुत्तमान्नारदाद् भूय इति ज्ञेयम् । ध्यानात्मनो वरुणस्य महिमानमाह – **ध्यायतीवेति** ॥ पृथिव्यादयः सर्वे चेतनाः ध्यायन्तीव भगवद्ध्यानपरा एव तिष्ठन्ति । ध्यानस्य भूयस्त्वादेवेति भावः । इवशब्दोऽस्वातन्त्र्यद्योतकः । न बहुभाषिण इति वा एके पृथिव्यादयो जडाः । निश्चलत्वाद् ध्यायन्तीवेत्यर्थ इत्याहुः । मनुष्यतां प्राप्ता देवा देवमनुष्याः । ते ध्यायन्तीव, न बहुभाषिण इत्यर्थः । **तस्माद्** ध्यानस्य भूयस्त्वादेव **इह** लोके **ये** जनाः **मनुष्याणां** मध्ये **महत्तां** ज्ञानबलैश्वर्यादिभिर्महत्त्वं **प्राप्नुवन्ति ते** जनाः ध्यानापादांशा इव, ध्यानस्य आपद्यत इत्यापादः ध्यानसम्पाद्यफलम्, तस्यांशः । ध्याना-पादस्यांशो येषां ते, ध्यानापादांशा इति व्यधिकरणबहुव्रीहिः । ध्यानापादांश एषामस्तीति ध्यानापादांशा इति अर्शआद्यच्प्रत्ययान्तो वा । इवशब्दोऽस्वातन्त्र्यद्योतकः । इदानीं जनेषु दृश्यमानमहत्त्वं पूर्वकृत-ध्यानजन्यफलैकदेश इत्यर्थः । साधने फले च भगवानेव स्वतन्त्र इति भावः । **अथ ये अल्पाः** ज्ञानबलैश्वर्यादि-हीनतया वर्तन्ते, **ते कलहिनः** कलहवन्तः, **पिशुनाः** राजादौ परवित्तादि-वाचकाः, **उपवादिनः** परदोषानुवादकाः भवन्तीत्यर्थः । न तु ध्यानलेशभागिन इति भावः । अथ

ये प्रभवः प्रबुभूषवः भूतिमन्तो भवामेतीच्छवः ते ध्यानापादांशा इवैव भवन्ति, ध्यानानुष्ठानेन तज्जन्यफलैकदेशभागिनो भवन्तीत्यर्थः । एवं ध्यान-माहात्म्यमुक्त्वा कर्तव्यमाह – **ध्यानमिति ॥** ध्यानमानिनि वरुणे ब्रह्मोपास्स्वेत्यर्थः ॥ १ ॥

**स यो ध्यानं ब्रह्मेत्युपास्ते यावद् ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद् भूय इति ध्यानाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ६ ॥**

॥ **यावद्ध्यानस्येति ॥** ध्यानमानिनो वरुणस्येत्यर्थः ॥ २ ॥ ६ ॥

**॥ इति षष्ठः खण्डः ॥**

**अथ सप्तमः खण्डः**

*( ध्यानाभिमानिवरुणाद् विज्ञानाभिमानिचन्द्रस्य श्रेष्ठतावर्णनम् )*

**विज्ञानं वाव ध्यानाद् भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चाऽपश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयांसि च तृणवनस्पतीञ्छ्वाप-दान्याकीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥ १ ॥**

॥ **विज्ञानमिति** ॥ विज्ञानमानी सत्यस्य विवेचनहेतुना विज्ञाननामा चन्द्रः तत्समौ सूर्ययमौ स्वायम्भुवमनुपत्नी शतरूपा चेति तिस्रो देवताश्च ग्राह्याः । विज्ञानादिचतुष्टयं ध्यानाद् वरुणाद् भूयः । तस्य महिमानमाह – **विज्ञानेनेति** ॥ शिष्टं प्राग्वत् । हृदयं भगवन्तम् । अहृदयं भगवतोऽन्यत् ॥ **विज्ञानमुपास्स्वेति** ॥ विज्ञानशब्दितचन्द्रादिचतुष्टये ब्रह्मोपास्स्वेत्यर्थः ॥ १ ॥

**स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो ह वै लोकान् ज्ञानवतोऽभिसिद्ध्यति यावद् विज्ञानस्य गतं तत्रास्य यथा-कामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद् भूय इति विज्ञानाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ७ ॥**

विज्ञानवतः चन्द्राद्यधिष्ठितलोकान् ॥ **विज्ञानादिति** ॥ विज्ञानशब्दितचन्द्रसूर्यधर्मशतरूपाख्यदेवताचतुष्टयाद् भूयोऽस्ति किमित्यर्थः ॥ २ ॥

॥ इति सप्तमः खण्डः ॥

## अथ अष्टमः खण्डः

*( विज्ञानाभिमानिचन्द्राद् बलाभिमानिप्रवहस्योत्तमत्वकथनम् )*

**बलं वाव विज्ञानाद् भूयोऽपीह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन् परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन् द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति**

**बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेनाऽपो बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकं बलेन वै लोकस्तिष्ठति बलमुपास्स्वेति ॥ १ ॥**

॥ **बलमिति** ॥ बलं द्विविधं युक्तिजन्यनिर्णयवत्त्वरूपमान्तरं बलं देहदार्ढ्यादिरूपं बाह्यबलं चेति । तद्विविधबलमानी बलनामा भूतवायुः प्रवहः विज्ञानाद् विज्ञानशब्दितचन्द्रादिचतुष्टयाद् भूयः । भूयस्त्वं व्यनक्ति-**अपीति** ॥ **विज्ञानवतां** शतमप्येको युक्तिजन्यनिर्णय-रूपान्तरबलवान् **आकम्पयते** कम्पमानान् करोति । **स** पुमान् **यदा बली** युक्तिज्ञतारूपान्तरबलवान् **अथ** तदा संसारादुत्**थाता** उद्गतो **भवति** । यदि देहादिबाह्यबलवान् तर्हि कर्मकरणाद्यर्थं उत्थितो भवति । **उत्तिष्ठन् उ** एव **परिचरिता** गुर्वादिपरिचर्याकर्ता **भवति** । **परिचरंश्च उपसत्ता**, तृजन्तोऽयम्, उपसत्तिकर्ता भवति । **उपसीदंश्च** तेभ्यः भगवन्तं **श्रोता मन्ता बोद्धा द्रष्टा** भवतीति यथायोगं पौर्वापर्येण योजना । **कर्ता** वर्णाश्रमोचितधर्मानुष्ठाता तेन च **विज्ञाता** विशेषज्ञाता भवति । बलमानिनो महिमान्तरमाह – **बलेनेति** ॥ बलशब्दितभूतवायुमानिना प्रवहेण तदभिमन्यमानस्वबलेनेति वा पृथिव्यादयस्तिष्ठन्तीत्यर्थः । देवा मनुष्यतां प्राप्ताः देवमनुष्याः ॥ **आकीटेति** ॥ कीटपतङ्गपिपीलिकापर्यन्तं तिष्ठन्तीति यथायोगं विभक्तिविपरिणामेन सर्वत्रान्वेति – **बलमिति** ॥ बलमानिनि प्रवहे ब्रह्मोपास्स्वेत्यर्थः ॥ १ ॥

**स यो बलं ब्रह्मेत्युपास्ते यावद् बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद् भूय इति बलाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ८ ॥**

बलस्य बलमानिनः प्रवहस्य ॥ २ ॥

॥ इति अष्टमः खण्डः ॥

## अथ नवमः खण्डः

*( बलाभिमानिप्रवहाद् अन्नाभिमान्यनिरुद्ध उत्तमः )*

**अन्नं वाव बलाद् भूयस्तस्माद् यद्यपि दशरात्रीर्नाश्नीयाद् यद्युह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्नस्याशी द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥ १ ॥**

॥ **अन्नमिति** ॥ एतदपि ज्ञानजन्यरतिरूपमान्तरमन्नं, प्रसिद्धं बाह्यमन्नं चेति द्विविधम् । द्विविधान्नमानी अनुनादित्वहेतुनाऽन्ननामा अनिरुद्धः बलाद् द्विविधबलात् प्रवहाद् **भूयः** श्रेष्ठः । तत्र युक्तिज्ञत्वरूपान्तरबलमानिरूपादान्तरान्नमान्यनिरुद्धरूपं भूयः । देहदार्ढ्यादिरूपबाह्यबलरूपाद् बाह्यान्नं भूय इति विवेकः । एतच्चोपलक्षणम् । अनिरुद्धसमाः स्वायम्भुवमनु-बृहस्पति–दक्ष–शची–रतयः पञ्च, अनिरुद्धश्चेति षडपि देवाः बलाख्यप्रवहाद् भूयांस इति ज्ञेयम् । अन्नस्य महिमानमाह – **तस्मादिति** ॥ बलादन्नमानिनो भूयस्त्वात् । **यद्यपि दशरात्रीर्नाश्नीयाद् यदि जीवेत्** प्राणान् बिभृयात् । **उह** चेत् जीवेच्चेत् अथ तर्हि अद्रष्टेत्यादि । अन्नाशनाभावे श्रवणादिकं किमपि न भवेदेवेत्यर्थः । व्यतिरेकमुक्त्वाऽन्वयं चाऽह – **अथेति** ॥ **अन्नस्याशी** भोक्ता **द्रष्टा भवतीत्यादि** ॥ **अन्नमुपास्स्वेति** ॥ अन्नमान्यनिरुद्धे तत्समेषु स्वायम्भुवादिपञ्चसु च ब्रह्मोपास्स्वेत्यर्थः ॥ १ ॥

**स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान्**

**पानवतोऽभिसिद्ध्यति यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद् भूय इत्यन्नाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ९ ॥**

**अन्नवतः** अन्नमान्यधिष्ठितलोकान् । यद्वा अन्नपानादिभोगवतो लोकानित्यर्थः । अन्नाद् अनिरुद्धादिदेवताषट्काद् भूयोऽस्ति किमित्यर्थः ॥ २ ॥

## ॥ इति नवमः खण्डः ॥

## अथ दशमः खण्डः

*( अन्नाभिमान्यनिरुद्धाद् अबभिमान्याहङ्कारिकः प्राण उत्तमः )*

**आपो वावान्नाद् भूयस्यस्तस्माद् यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यद् द्यौर्यत् पर्वता यद् देवमनुष्या यत् पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकमाप एवेमा मूर्ता अप उपास्स्वेति ॥ १ ॥**

**॥ आपो वावेति ॥** आपोऽपि ज्ञानरत्या जायमानविषयालम्बुद्धिरूपतृप्तिलक्षणान्तरा आपो द्रवरूपा बाह्या आपश्चेति द्विविधाः । तदुभयमानी देहमाप्नोति व्याप्नोतीति अप्शब्दित आहङ्कारिकप्राणः अन्नाद् अन्नशब्दोपात्तादनिरुद्धादिषट्काद् भूयस्यः श्रेष्ठः । अत्राप्यान्तरान्नाद् ज्ञानजन्यरतिरूपाद् आन्तराः विषयालम्बुद्धिरूपतृप्तिलक्षणा आपः श्रेष्ठाः । बाह्यान्नाद् बाह्याः द्रवरूपा आपः श्रेष्ठा इति विवेकः । अम्मानिनः

प्राणवायोः व्यतिरेकान्वयाभ्यां महिमानमाह । तस्माद् अन्नादपि श्रेष्ठत्वाद् अपां यदा यदि सुवृष्टिर्न भवति तर्हि **प्राणाः**, प्राणन्ति चेष्टन्त इति प्राणाः, प्राणिनः कनीयः स्वल्पमन्नं भविष्यतीति व्याधीयन्ते विशिष्टाधियुक्ता भवन्ति । मनोव्यथावन्तो भवन्तीत्यर्थः । अथ सुवृष्टिर्भवति बह्वन्नं भविष्यतीति आनन्दिनः मोदमाना भवन्ति । आप एव मूर्ताः । मूर्ताः पदार्थाः । अबभिमान्यधीनत्वादाप एवेत्युच्यन्ते– **येयमित्यादिना आप एवेमा मूर्ता** इत्यन्तेन ।। मूर्तानां वस्तूनामब्जन्यत्वादिनाऽऽप एवेत्युच्यन्त इत्युच्यते । इमा आप एव मूर्ताः पदार्था इत्यर्थः । **अप उपास्स्वेति** ।। अप्शब्दितप्राणे ब्रह्मोपास्स्वेत्यर्थः ।। १ ।।

**स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान् कामाꣳस्तृप्तिमान् भवति यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। २ ।। १० ।।**

अद्भ्यः आहङ्कारिकप्राणात् ।। २ ।।

**।। इति दशमः खण्डः ।।**

**अथ एकादशः खण्डः**

*( अबभिमान्याहङ्कारिकप्राणात् तेजोभिमानी पुरन्दर उत्तमः )*

**तेजो वावाद्भ्यो भूयस्तद्वा एतद् वायुमागृह्याऽऽकाशमभितपति तदाऽऽहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भि-राह्लादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज**

**एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति ॥ १ ॥**

॥ **तेज इति** ॥ तेजोऽपि प्रातिभाख्यमान्तरं, बाह्यं चेति द्विविधम् । तदुभयमानी ओजोरूपत्वेन तेजःशब्दितः पुरन्दरेन्द्रस्तत्समः कामश्चाद्भ्यः प्राणाद् भूयः श्रेष्ठः । तत्राऽन्तरात् अप्शब्दिताद् ज्ञानरतिजन्यतृप्तिरूप-विषयालम्बुद्धिरूपान्तरं प्रातिभाख्यं तेजो भूयः । बाह्यद्रवरूपाद्भ्यो बाह्यं जडरूपं तेजो भूय इति विवेकः । तेजःशब्दितपुरन्दरस्य महिमानमाह – **तद्वा एतत्** तेजः **वायुमागृह्यावष्टभ्य** निश्चलीकृत्येति यावत्, **आकाशमभितपति** आकाशं व्याप्य तपति, घर्मरूपतापं जनयति तदा जना आहुः । किमिति ? **निशोचति नितपति वर्षिष्यति** वै इत्याहुरित्यन्वयः । निशोचति नितपतीत्यनयोर्बाह्यान्तरतापभेदेन वा सामान्यविशेषभावादिभेदेन वा भेदो ध्येयः । **तेज एव** पुरन्दर एव । **तत्** स्वस्वरूपं वायुस्तम्भादिकं पूर्वं दर्शयित्वा प्रदर्श्यापः सृजते । तदा एतद् एते आह्लादाः स्तनयित्नवः आह्लादका मेघाः ऊर्ध्वाभिस्तिरश्चीभिश्च विद्युद्भिः सह चरन्ति । यद्वा तदेतदिति पञ्चम्यर्थे । **तदेतत्** तस्मात् तेजः शब्दितपुरन्दरादाह्लादाः स्तनयित्नवः विद्युद्भिः चरन्तीति । तस्माद् विद्युद्भिः स्तनयित्नुचरणाद्धेतोर्विद्योतते स्तनयति वर्षिष्यतीत्याहुः । वै प्रसिद्धम् । तेज एव तद् विद्युदादिपूर्वं दर्शयित्वाऽथानन्तरमपः सृजते ॥ **तेज उपास्स्वेति** ॥ तेजःशब्दिते पुरन्दरे कामे च ब्रह्मोपास्स्वेत्यर्थः ॥ १ ॥

**स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततमस्कानभिसिद्ध्यति यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ११ ॥**

शिष्टं प्राग्वत् । **तेजस्वतो भास्वत** इत्यनयोरवान्तरभेदेनापौनरुक्त्यं ज्ञेयम् । अत एवापहततमस्कानित्यर्थः ॥ २ ॥ ११ ॥

॥ इति एकादशः खण्डः ॥

अथ द्वादशः खण्डः

*( तेजोभिमानिपुरन्दरादाकाशाभिमान्युमाया उत्तमत्वनिरूपणम् )*

**आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाऽऽह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे न रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति ॥ १ ॥**

॥ **आकाश इति** ॥ आकाशोऽपि स्थिरप्रातिभरूपान्तरः छिद्रात्मको बाह्यश्चेति द्विविधः । तदुभयमानिनी दीप्तत्वादाकाशनाम्नी उमादेवी । तत्समभूते सौपर्णी वारुणी चेत्येतत् त्रयं तेजसः तेजःशब्दोक्तेन्द्रकामाभ्यां भूयान् श्रेष्ठः । तत्राऽन्तरचञ्चलप्रातिभाख्यात् तेजस आन्तरस्थिर-प्रातिभाख्यः आकाशः श्रेष्ठः । बाह्यतेजसो बाह्याकाश इति ध्येयम् । आकाशाख्यदेवीनां महिमानमाह– **आकाशो वै सूर्याचन्द्रमसावि-त्यादि** ॥ तदधीनत्वहेतुना राजा राष्ट्रमितिवदयमभेदव्यपदेशः । किञ्च सर्वोऽपि व्यापारः आकाशायत्त इत्याह – **आकाशेनाऽऽह्वयतीत्यादि** ॥ श्रुतवतोक्तं वचनं वक्ताऽन्यः प्रतिशृणोति । आकाशमभिजायते पुत्रपौत्रादि ॥ **आकाशमुपास्स्वेति** ॥ आकाशशब्दिते देवीत्रये ब्रह्मोपा-स्स्वेत्यर्थः ॥ १ ॥

**स य आकाशं ब्रह्मेत्युपास्त आकाशवतो ह वै स लोकान् प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिद्ध्यति यावदाकाशस्य गतं**

**तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद् भूय इत्याकाशाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १२ ॥**

आकाशवतः आकाशमान्यधिष्ठितलोकानवकाशयुक्तलोकानिति वा। आकाशाद् आकाशपदोपात्तदेवीत्रयाद् भूयोऽस्ति किमित्यर्थः । अत्र बलान्नाप्तेजआकाशानां द्विविधानां मध्ये बाह्येषु चोत्तरोत्तराणां पूर्वकारणत्वमान्तरेषु चोत्तरोत्तरं प्रति पूर्वस्य व्यञ्जकत्वरूपकारणत्वं ज्ञेयम् ॥ २ ॥

**॥ इति द्वादशः खण्डः ॥**

**अथ त्रयोदशः खण्डः**

*( आकाशाभिमान्युमायाः सकाशात् स्मरणाभिमानी रुद्र उत्तमः )*

**स्मरो वा आकाशाद् भूयाꣳस्तस्माद् यद्यपि बहव आसीरन्नस्मरन्तो नैव ते कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन् स्मरेण वै पुत्रान् विजानाति स्मरेण पशूꣳ स्मरमुपास्स्वेति ॥ १ ॥**

**॥ स्मर इति ॥** अच्छिद्रस्मृतिरूपस्मरमानी सममेकप्रकारं रमत इति स्मरनामा शिवः, तत्समौ सुपर्णशेषौ चेति त्रयः आकाशादुमादेः भूयान् श्रेष्ठाः । एतदुपलक्षणम् । उमादिदेवीत्रयादाकाशशब्दिताद् भूयसो जाम्बवत्यादिदेवीषट्कादपि भूयान् स्मरः शिवादिरिति ज्ञेयम् । तस्य महिमानमाह – **तस्मादित्यादिना ॥** तस्मादाकाशादितो भूयस्त्वा-देवोक्तरूपस्मरस्य । यद्यपि यदि बहव एकत्राऽसीरन्नपि उपविशेयुः ते

प्रागनुभूतमस्मरन्तः श्रवणमननविज्ञानहीना एव भवन्ति , यदा वा ते एकत्र मिलिताः प्राग् ज्ञातं स्मरेयुरथ तर्हि श्रवणादिमन्तो भवेयुरित्यर्थः । स्मरेण स्मृत्या ममैते पुत्राः पशव इति पुत्रान् पशून् जानाति – **स्मरमिति** ॥ स्मरशब्दिते शिवादिदेवत्रये ब्रह्मोपास्स्वेत्यर्थः ॥ १ ॥

**स यः स्मरं ब्रह्मेत्युपास्ते यावत् स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद् भूय इति स्मराद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १३ ॥**

**स्मरात्** स्मरशब्दितदेवतात्रयात् ॥ २ ॥

**॥ इति त्रयोदशः खण्डः ॥**

## अथ चतुर्दशः खण्डः

*( स्मरणाभिमानिरुद्रादाशाभिमानिभारत्याः श्रैष्ठ्यकथनम् )*

**आशा वाव स्मराद् भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राँश्च पशूँश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥ १ ॥**

॥ **आशेति** ॥ आसमन्तात् शं सुखं यस्या इति व्युत्पत्त्या पूर्णसुखरूपतयाऽशानाम्नी आशामानिनी भारती, तत्समा सरस्वती च स्मरात् स्मरशब्दितदेवत्रयाद् भूयसी सर्वगुणैः श्रेष्ठा । इयं च प्राणिनामीश्वरापरोक्षज्ञानस्वामिनी । तस्याः महिमानमाह – **आशेद्धो वा इति** ॥ **आशेद्धः** मन्त्रानधीयीयेति आशया समृद्धः **स्मरः** स्मृतिमान् भवति । अथानन्तरम**धीते** । कर्माणि कुर्वीयेति आशयेद्धः **स्मरः** स्मृतिमान् । अथ कर्म कुरुते । इच्छेयेति आशेद्धः स्मरः स्मृतिमानिच्छते इत्यर्थो

ज्ञेयः । **आशाम्** आशाशब्दितभारतीसरस्वत्योर्ब्रह्मोपास्स्वेत्यर्थः ।। १ ।।

**स य आशां ब्रह्मेत्युपास्ते आशयाऽस्य सर्वे कामाः समृद्ध्यन्त्यमोघा हास्याऽशिषो भवन्ति यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। २ ।। १४ ।।**

आशया आशादेवीप्रसादेनेति यावत् ।। २ ।।

**।। इति चतुर्दशः खण्डः ।।**

**अथ पञ्चदशः खण्डः**

*( आकाशाभिमानिभारत्याः सकाशात् स्वरूपानन्दाभिमानी प्राण उत्तमः )*

**प्राणो वा आशाया भूयान् यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वꣳ समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ।। १ ।।**

**।। प्राण इति ।।** प्रकृष्टसुखरूपस्वरूपानन्दलक्षणमुक्त्यभिमानी सर्वचेष्टकत्वहेतुना प्राणनामा मुख्यवायुर्ब्रह्मा चाऽऽशायाः भारत्यादिदेवीद्वयात् श्रेष्ठः । उपासकवर्गेऽयमेवोत्तम इत्यर्थः । तदाह सूत्रे **'इयदामननात्'** (ब्र.सू.३.३.३५) इति । तस्य महिमानमाह– **यथा वा इति ।।** रथनाभौ रथचक्रे **अराः यथा समर्पिताः** सम्प्रोताः, एवमेतस्मिन् **प्राणे सर्वं** जगत् **समर्पितं** सम्प्रोतम् । **प्राणः** मुख्यवायुः **प्राणेन** हरिणा **याति । प्राणः** हरिः **प्राणं** वायुं प्रत्यभीष्टं **ददाति** । यद्वा, **प्राणो** वायुः **प्राणं** भगवन्तं **ददाति** शिष्येभ्य उपदिशतीत्यर्थः । **प्राणाय** हरये **ददाति** मुक्तौ

हरिं प्रापयति भक्तानिति यावत् । मातापित्रादिसर्वजीवनहेतुतया सर्वत्र सन्निहितत्वमहिमानमाह[१] । प्राणो वै पिता तज्जीवनहेतुतया तत्र स्थितत्वात् पितेत्युच्यते । एवमग्रेऽपि ॥ १ ॥

*( मातापित्रादिषु प्राणोपासना)*

**स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किञ्चिद् भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥**

अन्वयव्यतिरेकाभ्यामुक्तमेव व्यनक्ति– **स यदीति ॥ किञ्चिदिति ॥** मुख्यवायुसन्निधियुतं पित्रादिकं प्रति किञ्चिद् भृशमिव निष्ठुरतया प्रत्याह निराकरोति । तदा एनं प्रत्याचक्षाणं निराकुर्वाणं प्रति त्वा त्वां धिग् दहेत्, यद्वा धिग् अस्तु अभद्रमस्तु तवेत्याहुर्जनाः । कुत आहुरित्यतो हेतुमाह – **पितृहा वै त्वमसीति ॥** इतिशब्दः सर्वत्र हेत्वर्थः ॥ २ ॥

**अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषं दहेन्नैवैनं ब्रूयुः पितृहाऽसीति न मातृहाऽसीति न भ्रातृहाऽसीति न स्वसृहाऽसीति नाऽऽचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥ ३ ॥**

अथेत्यर्थान्तरे । एनान् पित्रादीन् । उत्क्रान्तप्राणान् उत्क्रान्तः प्राणो येभ्यस्त इति बहुव्रीहिः । मुख्यप्राणेन त्यक्तदेहान् समासेन सङ्कोचेन एकैकावयवेन दहेत् । व्यतिषं विलुण्ठ्य सामस्त्येनेति यावत् । शूलेव दहेत् कश्चित् । शिष्टं व्यक्तम् ॥ ३ ॥

**प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान**

---

१.आहेत्यनन्तरं 'प्राणेति' इति प्रतीकेन भाव्यमिति भाति ।

**एवं विजानन्नतिवादी भवति तं चेद् ब्रूयुरतिवाद्यसीत्यति-वाद्यस्मीत्येव ब्रूयान्नापह्नुवीत** ॥ ४ ॥ १५ ॥

उपसंहरति – **प्राणो ह्येवैतानीति** ॥ पित्रादीनि सर्वाणि । तदायत्तजीवनत्वात् ताच्छब्द्यम् । स प्रसिद्ध एष अधिकारी कश्चिदेवम् उक्तदिशा प्राणमाहात्म्यश्रवणमननविज्ञानवान् अतिवादी सर्वातिशायि-भूतवस्तुवादी भवति । तं चेद् ब्रूयुः अतिवाद्यसीति अतिवाद्यस्मीति ब्रूयात् नापह्नुवीत नापलपेदित्यर्थः । अत्र पूर्वपूर्वेभ्य उत्तरोत्तरेषामुत्तमत्वे हेतुः **'बाह्याद्भ्यो बाह्यमन्नं च'** इत्यादिभाष्यादवसेयम्[१] ।

**"आधिक्ये परिमाणं च सर्वे त्वेते दशोत्तराः ।**
**पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च ।**
**द्विगुणा एवानिरुद्धोऽनिलात् पञ्चगुणाधिकः"**
इत्यादिभाष्याद् ज्ञेयम् ॥ ४ ॥ **इति पञ्चदशः खण्डः** ॥

## अथ षोडशः खण्डः

*( मुख्यप्राणादपि विष्णुरुत्तमः )*

**एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति** ॥ १ ॥ १६ ॥

किमयमेव सर्वोत्तमः ? इत्यत उपासकवर्गेऽस्य सर्वातिशायित्वं उपास्यस्तु सर्वश्रेष्ठोऽन्योऽस्तीत्याह – **एष त्विति** ॥

तुशब्दोऽर्थान्तरवाची । यः सत्येन निर्दोषत्वनियामकत्वहेतुभ्यां सत्य-नामकेन हरिणा योऽतिवदति सत्याख्यं ब्रह्मैव सर्वातिशायीति वदति । एष

१. अवसेय इति स्यादिति भाति ।

**तु वा अतिवादी** अतिशयितवस्तुवादी । वै प्रसिद्धमेतत् । नामवागादिपूर्वतनप्रकरणेष्विवात्र प्रश्नप्रतिवचनयोरश्रवणेऽप्यर्थान्तर-वाचिना तुशब्देन पूर्वप्रकरणविच्छेदसूचनेन **'अस्ति भगवः प्राणाद् भूयः'** इति प्राणाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति सत्यं वाव प्राणाद् भूय इति प्रश्नप्रतिवचनयोरध्याहार्यत्वादिति भावः । तदाह सूत्रे – **'व्यतिहारो विशिंषन्ति हीतरवत्'**(ब्र.सू.३.३.३८) इति । हे भगवो नारद ! सोऽहं सत्येनातिवदामि सत्याख्यं ब्रह्मैव सर्वातिशायीति वदामि । सत्यं त्वेव विजिज्ञासितव्यमित्युवाच कुमार इत्यर्थः । सत्यं सत्यनामकमहं विजिज्ञासे ज्ञातुमिच्छामीति नारदः । अत्र प्रकरणे तुशब्दः सोपपत्तिकमेव सत्यं विजिज्ञासितव्यमित्यादिरूपविशेषद्योतको न पूर्वत्रेवार्थान्तरद्योतक इति ज्ञेयम् । तदाह सूत्रे–**'सैव हि सत्यादयः'**(ब्र.सू.३.३.३९) इति । कुतो हेतोर्निर्दोषो नियामकश्च सन् सत्यनामा हरिः तं हेतुभूतं गुणं ज्ञातुमिच्छामीति प्रश्नाभिप्रायः ॥ १६ ॥

**॥ इति षोडशः खण्डः ॥**

**अथ सप्तदशः खण्डः**

*(भगवान् सत्यज्ञानादिगुणपरिपूर्णः )*

**यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥ १ ॥ १७ ॥**

स्वपरगताशेषविषयकज्ञानवत्त्वादुक्तरूपसत्यमासीदिति भावेन लोके विज्ञानसत्यवचनयोर्हेतुहेतुमद्भावमाह सनत्कुमारः – **यदेति** ॥ अन्वय-व्यतिरेकावुक्त्वा निगमयति – **विजानन्नेवेति** ॥ एवमग्रेऽपि । विज्ञानं

त्वेवेति सोपपत्तिकं विज्ञानगुणात्मकत्वं सत्यनाम्नो हरेर्विजिज्ञासितव्य-मित्यर्थः । उक्तरूपविज्ञानवत्त्वं भगवतः केन गुणेन ? तं हेतुभूतं गुणं ज्ञातुमिच्छामीति भावेन पृच्छति – **विज्ञानं भगवो विजिज्ञास इति** ।।१।।

**।। इति सप्तदशः खण्डः ।।**

**अथ अष्टादशः खण्डः**

*( मननविज्ञानयोर्हेतुहेतुमद्भावनिरूपणम् )*

**यदा वै मुनतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ।। १ ।। १८ ।।**

अशेषमन्तृत्वादेव सत्यनामा हरिर्विज्ञातेति भावेन मननविज्ञानयोर्हेतु-हेतुमद्भावमाह – **यदा वा इति** ।। मतिस्त्वेव मननगुणवत्त्वमेव सत्यस्य हरेः सोपपत्तिकं विजिज्ञासितव्यमित्यर्थः ।। **मतिमिति** ।। मननगुणवत्त्वे हेतुं विजिज्ञास इति नारदः ।। १ ।।

**इति अष्टादशः खण्डः ।।**

**अथ एकोनविंशः खण्डः**

**यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्धधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ।।१।।१९।।**

आस्तिकत्वात् मत्यात्मा सत्यो हरिरिति भावेन तयोर्हेतुहेतुमद्भावमाह – **यदा वा इति ।।** श्रद्दधाति आस्तिको भवति । शिष्टस्य प्रागिवार्थो ध्येयः । **श्रद्धा त्वेवेति ।।** सहेतुकमास्तिकत्वम् । श्रद्धां श्रद्धाहेतुगुणम् ।।१।।१९।।

## अथ विंशः खण्डः

**यदा वै निस्तिष्ठत्यथ श्रद्धधाति नानिस्तिष्ठन् श्रद्धधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥ १ ॥ २० ॥**

सुस्थिरत्वादास्तिक इति भावेन तयोः कार्यकारणभावमाह – **यदा वा इति** ॥ निस्तिष्ठति स्थिरो भवति । निष्ठा त्वेव सुस्थिरत्वमेव । निष्ठां निष्ठाहेतुगुणम् ॥ १ ॥ **इति विंशः खण्डः** ॥

## अथ एकविंशः खण्डः

**यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥ २१ ॥**

सर्वकर्तृत्वादेव स्थिरत्वमिति भावेन तयोः कार्यकारणभावमाह – **यदा वा इति** ॥ **कृतिस्त्वेव** कर्तृत्वं सहेतुकमेव । **कृतिमिति** कर्तृत्वहेतुगुणम्[१] ॥ १ ॥ **इति एकविंशः खण्डः** ॥

## अथ द्वाविंशः खण्डः

**यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १ ॥ २२ ॥**

पूर्णसुखोद्रेकादेव कर्तृत्वमिति भावेन तयोर्हेतुहेतुमद्भावमाह– **यदा वा**

---

१. 'कर्तृत्वे हेतुगुणम्' इति मुद्रितपुस्तकस्थपाठः प्रामादिकः ।

इति ॥ **सुखमेवेति** सुखोद्रिक्तत्वहेतुम् ॥ १ ॥ **इति द्वाविंशः खण्डः ॥**

## अथ त्रयोविंशः खण्डः

*( पूर्णसुखात्मकत्वं भगवतो लक्षणम् )*

**यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥ १ ॥ २३ ॥**

पूर्णगुणत्वादेव पूर्णसुखत्वमिति भावेन तयोर्व्याप्तिमाह – **यो वै भूमेति** ॥ भूमपदस्य बहुत्ववाचित्वेऽपि भावभवित्रोरभेदेनेह पूर्णगुण-रूपधर्मिपरत्वं ज्ञेयम् । यो भूमा पूर्णगुणः, तद् वै स एव, विधेयापेक्षया नपुंसकम् । स सुखं पूर्णसुखरूपः अल्पेऽपूर्णगुणे सुखं पूर्णसुखं नास्ति । तदाह सूत्रे –'**भूमा सम्प्रसादादध्युपदेशात्**'(ब्र.सू.१.३.८) इति । सत्यत्वादिगुणसप्तकस्यापि भूमशब्दितपूर्णगुणत्वस्य मूलहेतुत्वात् तस्य महिमानं पृच्छति – **भूमानं भगवो विजिज्ञास इति** ॥ अत्र '**सैव हि सत्यादयः**' इति, '**भूमा सम्प्रसादात्**' इति– अधिकरणद्वयेन सत्यादीनां सर्वेषां परमात्मत्वं 'व्यतिहारः' इत्यधिकरणेन तु प्राणात् सत्याद्यात्मनो भूम्न उत्तमत्वं च प्रकरणभेदाश्रयेण सिद्धम् । भूमेति सूत्रे भाष्योक्तदिशा प्राणस्य सत्याद्यात्मनो भूम्नश्च ब्रह्मत्वमेवेत्यङ्गीकारपक्षे प्राणपदेन प्राणमविहायैतदन्तर्यामितया हरेर्ग्रहणात् प्राणादप्युत्तमत्वसिद्धिः । प्राणानुक्तिदोषश्च नेति ज्ञेयम् । अत्र यद्यपि तारतम्योक्तिप्रस्तावे प्राणादनन्तरं सत्यात् पूर्वं प्रश्नप्रतिवचनाभ्यां श्रीतत्वमपि वक्तव्यम् । तथाऽपि '**नामादयस्तु बद्धत्वान्मोचकत्वात् परोऽपि च । उभयोरप्यभावेन यथाव्यक्तं न तूदितम्**' इति '**कामात्**' (ब्र.सू. ३.३.४०) इति सूत्रभाष्योक्तदिशा तदनुक्त्याशयो ध्येयः ॥ १ ॥ २३ ॥

## अथ चतुर्विंशः खण्डः

*( स्वातन्त्र्यनित्यमुक्तत्वे अपि भगवल्लक्षणे )*

**यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमाऽथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद् विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यँ स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥**

भूम्नो महिमानमाह – **यत्रेति** ॥ यस्मिन् वस्तुनि ज्ञाते अन्यत्रान्यद् वस्तु स्वातन्त्र्येण न पश्यति न शृणोति न विजानाति तदधीनमेवेत्येव जानाति स भूमेत्यर्थः । एवं महिमा भूम्नोऽन्यत्र नेत्याह – **यत्रेति** ॥ यस्मिन् दृष्टे श्रुते विज्ञाते चान्यदस्वातन्त्र्येण पश्यति शृणोति विजानाति च तदल्पं लक्ष्म्यादि जगत् । महिमान्तरमाह – **यो वै भूमेति** ॥ श्रीतत्वमल्पं चेदपि हरिप्रियत्वबलाद् अमृतमेवेति ज्ञेयम् । तदाह सूत्रे '**समना चासृत्युपक्रमादमृतत्वं चानुपोष्य**' (ब्र.सू.४.२.७) इति । नारदः पृच्छति – **स इति** ॥ स भूमा कस्मिन् प्रतिष्ठित इति । उत्तरमाह – **स्वे महिम्नीति** ॥ प्रतिष्ठित इत्यनुषङ्गः । यदि वा स्वे महिम्नि न प्रतिष्ठित इत्युच्यते ॥ १ ॥

**गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेव ब्रवीमीति होवाचान्यो ह्यन्यस्मिन् प्रतिष्ठित इति ॥ २ ॥ २४ ॥**

तदा गोअश्वं, द्वन्द्वैकवद्भावः सर्वत्र । गवाश्वादिकं महिमेत्याचक्षते । इतिवदहमेवं न ब्रवीमीति तमुवाच सनत्कुमारः । अन्योऽज्ञोऽन्यस्मिन् गवाश्वादौ भिन्नमहिम्नि प्रतिष्ठित इतिवदहं न ब्रवीमि, किन्तु स्वे महिम्नि

प्रतिष्ठित इत्येव ब्रवीमीति तमुवाचेत्यर्थः ॥ २ ॥ इति चतुर्विंशः खण्डः ॥

## अथ पञ्चविंशः खण्डः

*( सर्वत्र व्याप्तत्वमपि भगवल्लक्षणम् )*

**स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेद९ सर्वमिति ॥ १ ॥**

भूम्नः स्वमहिमप्रतिष्ठितत्वोपपादनाय सर्वव्यापित्वरूपमहिमानमाह – **स एवेति** ॥ स एवेदं सर्वं जगद् व्याप्य स्थित इत्युपसंहारः । स एव भूमैव । सामीप्यादिदंनामा । सर्वं पूर्ण इति वाऽर्थः । तदाह सूत्रे – **'धर्मोपपत्तेश्च'** (ब्र.सू. १.३.९)इति ॥ १ ॥

*( भगवतः सर्वेष्वपि रूपेषु तल्लक्षणानि समानानि )*

**अथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेद९ सर्वमिति ।**

**अथात आत्मादेश एवाऽत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेद९ सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवत्यथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषा९ सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥ २५ ॥**

अहङ्काराख्यमात्माख्यं च रूपद्वयं क्रमेणाऽह – **अथात इति** ॥ अथ योग्याधिकारिणः अतः फलवत्त्वात् । यद्वा, अथेति रूपान्तरे अतस्त-

त्प्रसादाद् अहमित्याक्रियत इत्यहङ्कारनाम्नो जीवस्थानिरुद्धाख्यस्य हरेरादेश उपदेश उच्यत इत्यर्थः। तस्य ब्रह्मरूपत्वख्यापनाय भूमलक्षणं तस्मिन्नाह – **अहमेवेति ॥ अथात इति ॥ अथेति** रूपान्तरापेक्षया। **अतस्तत्प्रसादाद्** आत्मनो व्याप्तस्य हरेरादेश उपदेश उच्यत इत्यर्थः। अत्र भूमा नारायणः अहङ्कारो जीवस्थोऽनिरुद्धः आत्मा व्याप्तो वासुदेव इति ज्ञेयः। आत्मापरोक्ष-ज्ञानिनो विपरीतज्ञानिनश्च फलमाह – **स वा एष इति ॥ स प्रसिद्ध एष** एव मुख्योऽधिकारी चतुर्मुखः **एवं पश्यन्** साक्षात्कुर्वन्, तस्य साधने मननश्रवणे कुर्वन्निति भावेनोक्तम्– **एवं मन्वान एवं विजानन्निति**। आत्मरतिः आत्मना रतिर्यस्य स आत्मरतिः भगवद्रतिः, आत्मना क्रीडत इत्यात्मक्रीडः, स्त्रीरूपः सन् आत्मना मिथुनीभूत इत्यात्ममिथुनः, आत्मनाऽऽनन्दत इत्यात्मानन्दः स ब्रह्मा स्वराट्, स्वः परमात्मा प्रत्यक्षतो राट् नियन्ता यस्य स इति स्वराड् भवति। तस्य सर्वेषु लोकेषु कामचारो भवति ॥२॥ **इति पञ्चविंशः खण्डः ॥**

## अथ षड्विंशः खण्डः

*( मुक्तो भगवत्कार्याणि साक्षात् पश्यति )*

**तस्य हवा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामाऽत्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदꣳ सर्वमिति ॥ १ ॥**

आत्मज्ञानिनो महिमानमाह – **तस्य हवा इति ॥** तस्य हवा

एतस्यैवाऽत्मसाक्षात्कारादिमतश्चतुर्मुखादेरात्मतः प्राण इत्यादौ जायते पाल्यते लीयते नियम्यते चेति साक्षात्कारो भवतीति सर्वत्र शेषो ध्येयः । आत्मापरोक्षज्ञानी मुक्तः सन् प्राण-आशा-स्मर-आकाश-तेज-अप्-अन्न-बल-विज्ञान-ध्यान-चित्त-सङ्कल्प-मनो-वाक्-नाम-मन्त्र-कर्म-शब्दितानां मुख्यवायुप्रभृतीनां प्रागुक्तदेवानां जननादिकम् आत्मतो भवतीति पश्यतीत्यर्थः । न केवलमेतावत् । आत्मतः कृत्स्नजगत आविर्भावतिरोभावौ भवत इत्यपि तस्य प्रत्यक्षं भवतीत्यर्थः । इतिशब्दः समाप्तौ ॥ १ ॥

**तदेष श्लोकः । न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वꣳ ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति ॥ स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः ॥ शतं च दश चैकश्च सहस्राणि च विꣳशतिः ॥ आहार-शुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ॥ स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति देवर्षये नारदाय भगवान् सनत्कुमारस्तꣳ स्कन्द इत्याचक्षते तꣳ स्कन्द इत्याचक्षते ॥ २ ॥ २६ ॥**

॥ इति श्रीमच्छान्दोग्योपनिषदि सप्तमोऽध्यायः ॥

आत्मज्ञानिनः सर्वलोकेषु कामाचारित्वसिद्ध्यर्थं मृत्युदर्शनाद्यभावं श्लोकेनाऽह– **तदेष श्लोक इति** ॥ तत्र आत्मज्ञानिमाहात्म्ये, एष वक्ष्यमाणः **श्लोको** भवति । तमाह – **न पश्य इति** ॥ पश्यतीति **पश्यो** जीवः **मृत्युं** न **पश्यति**, न **रोगं**, **नोत** दुःखतां दुःखित्वम् । **पश्यो** जीवः **सर्वं** पूर्णं भगवन्तं आत्मतः प्राण इत्यादिनोक्तं सर्वमिति वा **पश्यति सर्वं**

पूर्णं भगवन्तं **प्राप्नोति** । **सर्वशः** कामांश्चाऽप्नोतीत्यर्थः । आत्मज्ञानिनोऽवस्थितिप्रकारमाह – **स एकधेति** ।। **स** आत्मापरोक्षज्ञानी **एकधा भवति त्रिधा भवतीत्येवंरूपेण स्मृतः** । स ज्ञानी **शतं च दश** च **एकश्च सहस्राणि च पञ्चविंशतिश्च** भवतीत्यर्थः । भगवज्ज्ञान-सामर्थ्यादंशैर्नानारूपाणि धत्त इत्यर्थः । अविद्याविषकषायनिरसनहेतु-भूतभगवदापरोक्ष्यस्य स्थैर्येणावस्थितिकारणमाह – **आहारेति** ।। गुरोः सकाशात् श्रवणरूपा**हारशुद्धौ** सत्त्वशुद्धिः सत्त्वशब्दितज्ञानशुद्धिः, **सत्त्वशुद्धौ च ध्रुवा स्मृतिः** स्थिरस्मृतिः, स्थिरस्मृतिलाभे च सर्वाविद्याकामकर्मादिग्रन्थीनां **विप्रमोक्षः** । **तस्मै मृदितकषायाया**प-गतसमस्ताविद्याकामकर्मादिरूपकषायाय **नारदाय देवर्षये तमसः पारम्** अविद्यायास्तीरं परमात्मस्वरूपं **दर्शयति** अदर्शयत् **सनत्कुमारः** । भगवानित्युक्त्या विष्णुरिति भ्रान्तिं निराह – **यस्तमिति** ।। यो दर्शयति तं स्कन्द इत्याचक्षते । द्विरुक्तिः समाप्त्यर्था ।। २ ।। **इति षड्विंशः खण्डः** ।।

**।। इति श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते**

**सप्तमोऽध्यायः ।।**

-----------

**।। अथ श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते**

**अष्टमाध्याये प्रथमः खण्डः ।।**

*( हृत्कमले भगवदुपासना )*

ॐ अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद् वाव विजिज्ञासितव्यमिति ।। १ ।।

पूर्वत्र सर्वगतत्वादिसर्वगुणैर्भूमादिरूपो विष्णुरुपास्य इत्युक्तम् । स च न सर्वमुमुक्षुभिरुपासितुं शक्य इति सर्वमुमुक्षुसाधारणमुपास्यरूपं निरूपयत्यत्राध्याये– **अथ यदिदमिति ॥** विद्यान्तरारम्भेऽथशब्दः । अत्र ब्रह्मपुरशब्दः कर्मधारयः षष्ठीतत्पुरुषश्च तन्त्रेणोपात्तो ज्ञेयः । पुरशब्दः [१] 'पृ पालनपूरणयोः' इत्यतो 'ऋदोरप्' इत्यप्प्रत्यये ऋकारस्य चोकारे, पुरमिति रूपम् । बृहत्त्वात् पूर्णगुणत्वाद् ब्रह्म । पूर्णकामत्वात् पुरम् । ब्रह्म च तत् पुरं च ब्रह्मपुरं ब्रह्माख्यं पूर्णवस्तु, तस्मिन् ब्रह्मपुरे हरौ तदाधारत्वेन वर्तमाने । ब्रह्मणः पुरमिति व्युत्पत्त्या ब्रह्मपुरशब्दितेऽस्मिन् देहे यदिदं दहरं दभ्रमल्पं पुण्डरीकं कमलरूपं वेश्म गृहमस्ति, अस्मिन् दहरपुण्डरीकरूपवेश्मनि अन्तराकाशो भूताकाशो वर्तते । तस्मिन् पुण्डरीकान्तःस्थदहराकाशेऽन्तः यद् वर्तते तद् वस्तु अन्वेष्टव्यम् । तद् व्यनक्ति – **तद्वावेति ॥ तद्वाव** तदेव **विजिज्ञासितव्यं** श्रवणमनन-ध्यानैर्विषयीकर्तव्यम् । इदमेवान्वेषणं नाम नान्यदित्यर्थः । इति गुरुर्ब्रूयादित्यर्थः ॥ १ ॥

**तं चेद् ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद् वाव विजिज्ञासितव्यमिति स ब्रूयात् ॥ २ ॥**

तमेवं वक्तारं गुरुं शिष्याः यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तत्राऽकाशे किं विद्यते किन्नामकं किंमहिमकं यदन्वेष्टव्यमित्याद्युक्तं त्वयेति चेद् ब्रूयुः ॥ २ ॥

**यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्र-**

१. अस्य अन्वयश्चिन्त्यः ।

**मसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति ॥ ३ ॥**

स एवं तैरुक्तो गुरुर्ब्रूयात्– **यावानित्यादि ॥** अन्तर्हृदये हृद्ययत इति हृदयशब्दोक्ते पुण्डरीकवेश्मस्थदहराकाशेऽन्तः आकाशः –आ समन्तात् काशते दीप्यत इति वा , आ समन्तात् कं सुखमश्नात्यनुभवतीति वा, आ समन्तात् कान् कामान् शुभभोग्यान् अश्नातीति वा आकाशनामा हरिर्वर्तत इति किन्नामकमित्यस्योत्तरं ब्रूयात् । अयं बाह्यः बहिर्विद्यमानः आकाशनामा हरिर्यावान् देशकालगुणैर्यावद्व्याप्तिमान् तावानेष हृत्पुण्डरीकस्थाकाशगतो हरिरिति किंमहिमक इत्यस्योत्तरं ब्रूयादित्यर्थः । तस्य सर्वाधारत्वादिमहिमान्तरं चाऽह – **उभे अस्मिन्निति ॥** हृत्पद्मस्थभूताकाशगते आकाशाख्ये हरावित्यर्थः । न्यायविवरणादौ तु अन्तर्हृदय इत्यतः पूर्वं तस्येति शेषः । यो भगवानन्वेष्टव्यतयोक्तः किम्भूतः स इति पृष्टश्च तस्य हरेर्हृदये यावान् वा अयमाकाशस्तावान् सर्वोऽप्याकाशो विद्यते । अस्मिन्नुभे इत्यादीत्युक्तम् । अत्र द्यावापृथिव्यादिशब्देन तदभिमानिग्रहः । उभे इत्युक्तिर्मुक्तामुक्त-रूपवर्गद्वयग्रहणाय । तदेव विशदमाह– **यच्चास्येति ॥ अस्य** संसारिणः उपकारित्वे**नेह** यदुक्तं द्यावाभूम्यादिकं **यच्चास्य** संसारिणोऽनुपकारित्वेन **नास्त्य**विद्यमानमिवोच्यते मुक्तद्यावापृथिव्यादिकमिति यावत् । तदपि अत्र पुण्डरीकस्थाकाशगते हरौ समाहितं वर्तत इति स ब्रूयादिति पूर्वेणान्वयः ॥ ३ ॥

*( अनित्यहृदयस्थोऽपि भगवान् नित्यः )*

**तं चेद् ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितं सर्वाणि च भूतानि सर्वे च कामा यदैतज्जराऽवाप्नोति प्रध्वꣳसते वा किं**

**ततोऽतिशिष्यत इति** ॥ ४ ॥

उक्तं सर्वाधारत्वमाहात्म्यमाक्षिप्य समाधत्ते– **तं चेदिति** ॥ एवमुक्तवन्तमाचार्यं शिष्याश्चेद् ब्रूयुः। किमिति ? **ब्रह्मपुरे** कर्मधारयाश्रयेण तन्त्रेण प्रागुक्ते ब्रह्मपुराख्ये, षष्ठीतत्पुरुषाश्रयणेन ब्रह्मपुरपदोक्तदेहगतहृत्पुण्डरीकस्थाकाशगते **अस्मिन्** हरौ **यदिदं** द्यावाभूम्यादिकं **सर्वं समाहितं सर्वाणि भूतानि** समाहितानि। **सर्वे च कामाः** समाहिताः चेत् तर्हि **यदा एतद्** ब्रह्मणः पुरेत्युक्तब्रह्मशब्दितं शरीरं कर्म, **जराऽवाप्नोति** एतत् शरीरं कर्तृ **प्रध्वंसते वा** नाशमाप्नोति वा ततो देहनाशानन्तरं किमतिशिष्यत इति चेद् ब्रूयुरिति पूर्वेणान्वयः ॥ ४ ॥

**स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति** ॥ ५ ॥

स एवमुक्तो गुरुर्ब्रूयात्। किमिति ? अस्य ब्रह्मपुरशब्दितदेहस्य जरया एतद् ब्रह्मपुरशब्दितं ब्रह्म, द्वयोरपि प्राक् तन्त्रेण ब्रह्मपुरपदेन समासभेदेन प्रकृतत्वात्। न जीर्यति अस्य वधेनैतत् न हन्यते। एतद् ब्रह्मपुरं कर्मधारयाश्रयेणोक्तं ब्रह्मपुराख्यं ब्रह्म सत्यं नित्यम्, अतः सर्वाधारत्वं तस्य युक्तमिति भावेनोपलक्षणतयाऽऽह – **अस्मिन् कामा समाहिता इति** ॥ नास्य जरयैतज्जीर्यतीत्युक्तं प्रपञ्चेनाऽऽह – **एष आत्मेत्यादिना** ॥ **विजिघत्सः** विगतबुभुक्षः। तदाह सूत्रे– '**दहर उत्तरेभ्यः**' (ब्र.सू. १.३.१४) इति। तस्य मुक्ताश्रयत्वादिमहिमान्तरं चाऽऽह – **यथा हीति** ॥ **यथा** यथायोग्यमेव **यथानुशासनं** भगवदाज्ञानुसारेण प्रजाः **इह**

मुक्तौ भगवति वा **अन्वाविशन्ति** प्रविशन्ति । न केवलं प्रवेशमात्रम्, **यं यमन्तं** देश**मभिकामाः** प्राप्तीच्छवो भवन्ति मुक्ताः । यं यमन्तमित्युक्तं व्यनक्ति – **यं जनपदं यं क्षेत्रभागं** क्षेत्रप्रदेशं **तं तमेवोपजीवन्त्ये**तत्प्रसादादेवेत्यर्थः । उपलक्षणमिदम् । समस्तकामितभोगानेतत्प्रसादादुपजीवन्तीत्यर्थः ॥ ५ ॥

**तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते तद्य इहाऽत्मानमननुविद्य व्रजन्त्येताꣳश्च सत्यान् कामाꣳस्तेषाꣳ सर्वेषु लोकेष्वकामचारो भवत्यथ य इहाऽत्मानमनुविद्य व्रजन्त्येताꣳश्च सत्यान् कामाꣳस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥ १ ॥**

दहराकाशस्थस्याक्षय्यफलहेतुज्ञानविषयत्वमाहात्म्यं च व्यतिरेकान्वयाभ्यामाह– **तद्यथेति** ॥ तन्निदर्शनं यथा । **इह** लोके **कर्मचितः** कर्मसम्पादितो **लोको** गृहारामादिः **क्षीयते** । **एवमेवामुत्र** [१] **पुण्यचितः** यज्ञादिपुण्यसम्पादितः स्वर्गादिलोकोऽमुत्र परत्र क्षीयते । केषामित्यत आह– **तत्** तत्र जनेषु **ये इह** लोके **आत्मानं** भगवन्त**मननुविद्य** अज्ञात्वा, **एतांश्च सत्यान् कामान्** सत्यकामत्वादिप्रागुक्तात्मगुणान् चाननुविद्य ये व्रजन्ति **तेषा**मिति पूर्वत्रोत्तरत्र चान्वेति । अथेत्यर्थान्तरे ॥ ६ ॥ १ ॥

## अथ द्वितीयः खण्डः

*( मुक्ताकाङ्क्षितं सकलं सुलभ्यमिति निरूपणम् )*

**स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति**

१.उत्तरत्र 'अमुत्र' इत्यनूद्य 'परत्र' इति विवरणात् अत्र 'अमुत्र' इत्यधिकमिति भाति ।

**तेन पितृलोकेन सम्पन्नो महीयते ॥ १ ॥**

**अथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन सम्पन्नो महीयते ॥ २ ॥**

**अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयते ॥ ३ ॥**

**अथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयते ॥ ४ ॥**

**अथ यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयते ॥ ५ ॥**

**अथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ॥ ६ ॥**

**अथ यद्यन्नपानलोककामो भवति सङ्कल्पादेवास्य अन्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन सम्पन्नो महीयते ॥ ७ ॥**

**अथ यदि गीतवादित्रलोककामो भवति सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन सम्पन्नो महीयते ॥ ८ ॥**

**अथ यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते ॥ ९ ॥**

यं यमन्तमित्युक्तं सत्यकामत्वं विशदमाह – **स यदीत्यादिना** ॥ **स** ब्रह्मज्ञानी **पितृलोककामो भवति** पितृदर्शनेच्छावान् भवति । **अस्य** ज्ञानिन एवमिच्छावतः **सङ्कल्पादे**वेच्छामात्रादेव **पितरः समुत्तिष्ठन्ति** पुरतः उपस्थिता भवन्ति । **तेन पितृलोकेन** पितृदर्शनेन **सम्पन्नो** युक्तो **महीयते**। एवमग्रेऽप्यर्थो ध्येयः । तथाच सूत्रं **'सङ्कल्पादेव च तच्छ्रुतेः'**

(ब्र.सू.४.४.८)इति ॥ १–९ ॥

**यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते ॥ १० ॥ २ ॥**

यं यमन्तं देशम् अभिकामो भवति स देशः सङ्कल्पादेव समुत्तिष्ठति ॥ १० ॥ **इति द्वितीयः खण्डः ॥**

**अथ तृतीयः खण्डः**

*( 'संसारे आकाङ्क्षितं सर्वं कुतो न लभ्यते' इति प्रतिपादनम् )*

**त इमे सत्याः कामा अनृतापिधानास्तेषाँ सत्यानाँ सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥ १ ॥**

मुक्तस्योक्तं सत्यकामत्वं प्राग् विद्यामानमेव मुक्तावभिव्यज्यत इति वाच्यम् । तत्र किमावरणमित्यपेक्षायामाह– **त इम इति** ॥ **त इमे** मुक्तौ व्यक्ताः **सत्याः कामाः** मुक्तेः पूर्वम् **अनृतापिधानाः** । तद् व्यनक्ति– **तेषां** सत्यकामानां **सतां** प्राग् विद्यमानानाम**नृत**मनाद्यज्ञानम**पिधान**माच्छादनमिति । कुत एतदित्यत आह– **यो यो हीति** ॥ हि यस्माद् **अस्या**नृतापिहितसत्यकामस्यामुक्तस्य पुंसः यो यः पिता भ्रात्रादिर्वा इतो लोकात् प्रैति तं प्रेतं पित्रादिकं दर्शनाय द्रष्टुम् इह लोके न लभते न शक्तो भवति । तस्मादनृतापिधाना इति । अज्ञानाच्छादितसत्यकामत्वादेव प्रेतपित्रादिदर्शनं न लभते संसारिजीव इत्यर्थः ॥ १ ॥

*( मुक्तिर्नैजसुखानुभूतिरेव )*

**अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन् न लभते सर्वं**

**तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्त-द्यथाऽपि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥ २ ॥**

अनृतनिवृत्तौ तु सर्वाभीष्टप्राप्तिरित्याह– **अथेति** ॥ अर्थान्तरे । अनृतनिवृत्त्यनन्तरमिति वा। अस्य मुक्तस्य इह लोके ये च जीवाः जीवन्तः पित्राद्याः ये च प्रेताः मृताः तद्दर्शनादिकं न लभते । यद्यदन्यच्चेच्छन् इह संसारदशायां न लभते तत्सर्वमत्र वैकुण्ठादिविष्णुलोके गत्वा विन्दते लभते । अज्ञानावृतत्वमेव व्यक्तमाह– **अत्र हीति** ॥ अत्र संसारे सत्याः कामाः अनृतापिधानाः । ब्रह्मणः हृत्पद्माकाशेऽनुपलम्भान्नास्ति ब्रह्मेति शङ्कां सदृष्टान्तं निराह– **तद्यथेति** ॥ तन्निदर्शनं यथा । हिरण्यनिधिम् अपिनिहितम् अक्षेत्रज्ञा हिरण्यनिक्षेपस्थलमजानन्तः उपर्युपरि सञ्चरन्तोऽपि न विन्देयुर्न पश्यन्ति । एवमेवेमाः संसारिण्यः सर्वाः प्रजाः अहरहः प्रत्यहं एतं ब्रह्मलोकं, कर्मधारयः, सर्वाश्रयं ब्रह्म सुप्तौ गच्छन्त्योऽपि न विन्दन्ति न जानन्ति । तत्र हेतुमाह– **अनृतेन हि प्रत्यूढाः** ॥ अज्ञानेनाऽच्छादिता हि ॥ २ ॥

**स वा एष आत्मा हृदि तस्यैतदेतदेव निरुक्तꣳ हृद्ययमिति तस्माद्धृदयमहरहर्वा एवंवित् स्वर्गं लोकमेति ॥ ३ ॥**

यतोऽतः स वा एष आत्मा हृदि विद्यमानो नोपलभ्यत इत्यर्थः । तदाह सूत्रे **'गतिशब्दाभ्याम्'**(ब्र.सू.१३.१.१५) इति । पूर्वत्र किमत्र विद्यत इत्यत्र किन्नामकमिति कृतप्रश्नस्याऽकाश इत्येकं नामोक्तम् । निरुक्तिपूर्वं नामान्तरं चाऽह– **तस्येति** ॥ तस्य हृत्पुण्डरीकाकाशान्तर्वर्तिनः हृदयनाम्नः हृदि अयते गच्छति वर्तत इत्येतदेव निरुक्तं

निर्वचनमवयवार्थकथनमिति यावत् । तस्मादेवं निर्वचनवत्त्वाद् हृदयमितिनामकमित्यर्थः । निरुक्तिपूर्वं हृदयनामकहरिज्ञानिनः फलमाह– **अहरिति** ॥ अहरहर्वै एवंवित् स्वर्गं लोकं विष्णुलोकमेति ॥ ३ ॥

*( परमात्मनः पूर्णानुग्रहादेव मुक्तिरिति कथनम् )*

**अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति तस्य हवा एतस्य ब्रह्मणो नाम सत्यमिति ॥ ४ ॥**

ज्ञानसामर्थ्यादेव मुक्तो भवति किमित्यतो भगवत्प्रसादादित्याह – **अथेति** ॥ य एष सम्प्रसादः, सम्यक् प्रसादो यस्यासौ सम्प्रसादः भगवत्प्रसादवान् ज्ञानी अस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य प्राप्य स्वेन रूपेण ज्ञानानन्दादिशुद्धरूपेणाभिनिष्पद्यते । परञ्ज्योतिरित्युक्तः क इत्यत आह – **एष आत्मेति** ॥ एष परञ्ज्योतिःशब्दोक्तः आत्मा परमात्मा न सन्निहितो जीव इत्युवाच ह रमादेवी मन्त्रद्रष्ट्रीत्यर्थः । तदाह सूत्रे **'अन्यार्थश्च परामर्शः'** (ब्र.सू.१.३.२०) इति । आत्मानं विशिनष्टि – **एतदमृतमभयमेतद् ब्रह्मेतीति** ॥ चोवाचेत्यर्थः । तस्य नामान्तरं चाऽह – **तस्य हवा इति** ॥ तस्य हवा एतस्य ब्रह्मणः सत्यमिति नाम भवति ॥ ४ ॥

*( सत्यशब्दवाच्यो मुक्तामुक्तनियामको भगवान् )*

**तानि हवा एतानि त्रीण्यक्षराणि सत् ति यमिति तद् यत् सत् तदमृतमथ यत् ति तन्मर्त्यमथ यद् यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद् यमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ५ ॥ ३ ॥**

तन्नाम निर्वक्ति – **तानीति** ॥ कथमित्यत आह– सत् ति यमिति त्रीण्यक्षराणीत्यन्वयः । अक्षराणामर्थमाह – **तद्यदिति** ॥ तत् तत्राक्षर-त्रयमध्ये यत् सदित्यक्षरं तदमृतं मुक्तजातवाचकम् । अथ यत्तीत्यक्षरं तन्मर्त्यं संसारिजीववाचि । अथ यद् यमित्यक्षरं तेनाक्षरेण उभे मुक्तामुक्तजाते सतीतिशब्दाभ्यामुक्ते यच्छति नियच्छति नियमयतीति ह्येषोऽर्थ उच्यत इत्यर्थः । तस्मान्नियन्तृत्वाद् यमिति ज्ञानिनः फलमाह – **अहरहरिति** ॥ एवं मुक्तनियन्तृत्वेन सत्यशब्दार्थं जानन् भगवल्लोकमेतीति ॥ ५॥ **इति तृतीयः खण्डः** ॥

## अथ चतुर्थः खण्डः

*( निर्दुःखभगवत्प्राप्तितः दुःखनाश इति कथनम् )*

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतꣳसेतु-महोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतꣳ सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ॥ १ ॥**

हृत्पद्मस्थस्य हरेर्जिज्ञास्यत्वे महिमान्तरमाह– **अथेति** ॥ **य आत्मा** प्रागुक्तः । **स** विधृतिर्धारणक्षमः **सेतुः** 'षिञ् बन्धने' सितमस्मिन् जगदिति सेतुराश्रयः । एषां प्रमाणप्रमितानां लोकानामसम्भेदायासाङ्कर्याय सेतु-रित्यन्वयः । एतं सेतुं हरिम् अहोरात्रे न तरतः नातिक्रामतः । अहोरात्रे स एवातीत्य वर्तत इत्यर्थः । अहोरात्राभ्यामतार्यत्वं व्यनक्ति – **न जरेत्यादिना** ॥ एनमाप्नोतीति योज्यम् ॥ १ ॥

**तस्माद्वा एतꣳ सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तस्माद्वा एतं सेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्पद्यतेऽसकृद्विभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥**

अतः आत्मतः सर्वे पाप्मानो निवर्तन्ते सर्वपापरहित इति यावत्। कुतः? अपहतपाप्मा ह्येष ब्रह्मलोकः ब्रह्माख्यो लोको हरिरित्यर्थः। तदाह सूत्रे **'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः'** (ब्र.सू. १.३.१६)इति। तस्य सर्वपापास्पृष्टत्वमुपपादयति – **तस्मादिति** ॥ अपहतपाप्मनः प्रसादादेव खलु एतं सेतुं प्राप्तुमन्यत् संसारं तीर्त्वा प्रागन्धः सन्ननन्धो भवतीत्यादि। **विद्धः** दुरुक्त्यादिवेधवान्, **उपतापी** रोगवान्। तस्माद्वा सर्वपापहीनभगवत्प्रसादादेवैतं सेतुं गन्तुमन्यत् तीर्त्वा वर्तमानस्य नक्तं रात्रिरप्यहरेव निष्पद्यते। तत्र कारणमाह– **असकृद्विभातो ह्येवैष ब्रह्मलोक इति** ॥ हरिरित्यर्थः[१] ॥ २ ॥

**तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ३ ॥ ४ ॥**

एतस्य ज्ञानफलत्वात् तत्राभ्यर्हितसाधनापेक्षायामाह – **तद्य इति** ॥ तत् तत्र जनेषु मध्ये य एवैतं ब्रह्मलोकं भगवन्तं ब्रह्मचर्येण मनोवाक्कर्मभिः ब्रह्मणि वेदे चरणेन वर्तनेनानुविन्दन्ति जानन्ति प्राप्नुवन्ति वा तेषामेवैष ब्रह्मलोकः भगवल्लोकः सर्वेषु लोकेषु कामचारो भवतीति ॥ ३ ॥ **इति चतुर्थः खण्डः ॥**

## अथ पञ्चमः खण्डः

*( ब्रह्मचर्यस्वरूपकथनम् )*

**अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ॥ १ ॥**

१. 'हरिरिति' इति मुद्रितपुस्तके। 'ब्रह्मलोके हरिरिति' इति श. पाठः ॥

ज्ञानस्य श्रवणादिरूपब्रह्मचर्यं साधनं चेद् विविदिषन्तीत्यादिना यज्ञादेर्ज्ञानसाधनत्वोक्तिः कथमित्यतस्तत्सर्वं ब्रह्मचर्यमेवेत्याह – **अथ यद् यज्ञ इति** ॥ **अथ** ज्ञातव्यान्तरमुच्यत इत्यथपदस्यार्थः । यज्ञ इति यदाचक्षते प्राज्ञाः तद् ब्रह्मचर्यमेव ब्रह्मज्ञानसाधनीभूतं मनोवाक्कर्मभिर्ब्रह्मणि चरणमेव । कथम् ? याति जानाति ज्ञं भगवन्तमिति यज्ञ इति व्युत्पत्तेरिति भावेन यज्ञपदं व्युत्पाद्य दर्शयति– **ब्रह्मचर्येणेति** ॥ यज्ञपदगतं य इत्येतदनूद्यार्थमाह– **यो ज्ञातेति** ॥ ज्ञमित्यस्यार्थ**स्तमिति** ॥ **अनुविन्दते** जानातीति । एतेन, याति जानाति ज्ञं येन ब्रह्मचर्येणेति व्युत्पत्तिः सूचिता । यदिष्टमिष्टिरित्याचक्षते ब्रह्मचर्यमेव तत् । कथमित्यतो व्युत्पाद्य दर्शयति– **ब्रह्मचर्येण हीति** ॥ अनेनाऽत्मज्ञानमुद्दिश्य यजतेऽनेन ब्रह्मचर्येण हरिमिति व्युत्पत्त्या ब्रह्मचर्यमेवेष्टमिति व्युत्पत्तिः सूचिता । एवमग्रेऽपि योजना ध्येया । ब्रह्मचर्येण ह्येवेत्यादिना सतो हरितः त्राणम् अयते लभते येन ब्रह्मचर्येण तत् सत्त्रायणमिति व्युत्पत्तिः सूचिता । ब्रह्मचर्येण ह्यात्मानमनुविद्य ज्ञात्वा मनुते मननं करोतीत्यनेन मनुते अवगच्छत्यनेन ब्रह्मचर्येणेति मौनं ब्रह्मचर्यमित्युक्तं भवति ॥ १ ॥

**अथ यत् सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येवाऽत्मानमनुविद्य मनुते ॥ २ ॥**

॥ **एष ह्यात्मेति** ॥ यमात्मानं हरिं ब्रह्मचर्येणानुविन्दते जानाति एष आत्मा तस्य ज्ञानिनो न नश्यति । इष्टप्रदो भवतीति यावत् । **'तस्याहं न प्रणश्यामि'** इति गीतोक्तेः । एतेन अनाशकमयते लभते येन तद् ब्रह्मचर्यमनाशकायनमित्युक्तं भवति । अरण्यौ अरण्यनामकौ समुद्रावयते प्राप्नोति येन ब्रह्मचर्येण, तदरण्यायनमिति व्युत्पत्तिः प्रागिवोह्येति भावेन तामप्रदश्यारण्यौ कौ ? कुत्रत्यौ ? यत्प्राप्तिसाधनं ब्रह्मचर्यमित्यत आह–

**अरश्चेति ॥** अरश्च ण्यश्चेतिसञ्ज्ञकौ द्वौ चिदानन्दरसात्मकौ अमृतमयौ समुद्रौ ब्रह्मलोके श्वेतद्वीपे इतः भूलोकात् तृतीयस्यां तृतीयायां दिवि द्युशब्दिते ब्रह्मलोके वर्तेते इत्यर्थः । समुद्रप्रसङ्गादन्यदप्याह– **तदिति ॥** तत् तत्र ब्रह्मलोके **ऐरं** सुरामयं **मदीयं** मदकारि **सरश्च** विद्यते । **तत्** तत्र **सोमसवनो**ऽमृतस्राव्यश्वत्थस्तिष्ठति ॥ **तत्** तत्र **ब्रह्मणः अपराजिता-**नाम्नी **पूः** नगरी वर्तते । प्रभुविमितं प्रभुपरिमाणसमपरिमाणं हिरण्मयं पर्यङ्कं चास्ति ॥ २ ॥

**अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते ।**

*( अद्भुतं श्वेतद्वीपाख्यं विष्णुधाम )*

**अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत् । अरश्च हवै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयꣳ सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितꣳ हिरण्मयम् ॥ ३ ॥**

**तद् य एवैतावरं च वै ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥ ५ ॥**

तत् तत्र लोके ये अरं च ण्यं चार्णवौ ब्रह्मलोके वर्तमानौ ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः । तेषां सर्वेषु लोकेषु कामचारो भवतीति । तदाह 'गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च'[१]

---

१. 'गतिशब्दाभ्यामिति सूत्रांशेन तथाहि दृष्टं लिङ्गं च' इति हस्तलिखिते मुद्रितपुस्तके च ।

(ब्र.सू.१.३.१५)इति ॥ ४ ॥ **इति पञ्चमः खण्डः ॥**

## अथ षष्ठः खण्डः

*( हृदयस्थनाडीषु भगवद्रूपोपासना )*

**अथ या ता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ॥ १ ॥**

हृदयस्थोपास्तिप्रकारं विविच्याऽऽह – **अथ या इत्यादिना ॥** अथेति विद्यान्तरे। हृदयस्य हृदयनाम्नो हृद्गतस्य हरेः पञ्चरूपस्याधिष्ठानभूताः या एता नाड्यः हृत्पुण्डरीकस्य परितः स्थिताः सुषुम्ना, नान्दिनी, पिङ्गला, वज्रिका, इडा इतिनाम्न्यः ताः पञ्चनाड्यः पिङ्गलस्य पिङ्गलवर्णस्याणिम्नः सूक्ष्मतमस्य सङ्कर्षणस्य शुक्लस्य श्वेतवर्णस्याणुतमस्य वासुदेवस्य नीलस्य नीलसवर्णस्याणिम्नोऽनिरुद्धस्य पीतस्य पीतवर्णस्य प्रद्युम्नस्याणिम्नो रोहितस्य रक्तवर्णस्याणिम्नो नारायणस्य अधिष्ठानभूतास्तिष्ठन्तीति जिज्ञासितव्यमित्यर्थः। तत्रायं विवेकः । रोहितवर्णो नारायणो हृन्मध्य-गतसुषुम्नायां तिष्ठति। शुक्लो वासुदेवः अग्रतः स्थितनान्दिन्याम्। पिङ्गलः सङ्कर्षणस्तु पश्चिमभागस्थपिङ्गलाख्यायाम्। पीतः प्रद्युम्नस्तु वामभागस्थ-वज्रिकाख्यायाम् । नीलोऽनिरुद्धस्तु दक्षभागस्थेडायां तिष्ठतीति । तन्त्रसारे तु चतुर्थे,

**मध्ये सुषुम्ना विज्ञेया वज्रिकाख्या प्रकाशिनी ॥**
**वैद्युता ब्रह्मनाडीति सैव पञ्चप्रभेदिनी ॥**
**पृष्ठवामाग्रदक्षान्तर्भेदास्ते च क्रमेण तु ॥**

हरिन्नीलः सितः पिङ्गो लोहितश्चात्र केशवः ॥
'प्रद्युम्नादिस्वरूपेण ध्येयः'
इत्युक्तम् । आदित्येऽपि पिङ्गलादिपञ्चरूपी तिष्ठतीत्याह– **असाविति** ॥ आदित्वादादित्यनामाऽऽदित्यमभिव्याप्य स्थितो हरिः पिङ्गलः सङ्कर्षणः , एष शुक्लो वासुदेवः , एष नीलोऽनिरुद्धः, एष पीतः प्रद्युम्नः, एष लोहितो नारायणः ॥ १ ॥

**तद् यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात् प्रतायन्ते त आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥**

न केवलं हृद्गतस्य हरेरादित्यस्थता, किन्तु तद्रश्मिषु व्याप्तता चास्तीत्याह– **तद्यथेति** ॥ तन्निदर्शनं यथा । महापथो महान् मार्गः इमं सन्निहितममुं विप्रकृष्टं चेत्युभौ ग्रामावाततो व्याप्तः सन् गच्छति, एवमेता आदित्यस्याऽदित्यस्थस्याऽदित्यनाम्नो हरेः रश्मयः आदित्यरश्मिषु व्याप्ताः सन्तः इमं जीवममुमादित्यं चेत्युभौ लोकौ गच्छन्तीति । उक्तगतिप्रकारं विशदमाह– **अमुष्मादिति** ॥ अमुष्मादादित्याद् ये रश्मयः प्रतीयन्ते तत्र प्रतीयन्त इत्यर्थः । ते आसु नाडीषु सृप्ताः व्याप्ताः । आभ्यो नाडीभ्यो ये रश्मयः प्रतीयन्ते तत्रत्या इति यावत् । ते अमुष्मिन्नादित्ये सृप्ताः व्याप्ताः ॥ २ ॥

*( हृदयस्थभगवद्रूपं प्राप्तवतो न पापलेप इति निरूपणम् )*

**तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा**

(ब्र.सू.१.३.१५)इति ॥ ४ ॥ इति पञ्चमः खण्डः ॥

## अथ षष्ठः खण्डः

*( हृदयस्थनाडीषु भगवद्रूपोपासना )*

**अथ या ता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ॥ १ ॥**

हृदयस्थोपास्तिप्रकारं विविच्याऽऽह – **अथ या इत्यादिना** ॥ अथेति विद्यान्तरे । हृदयस्य हृदयनाम्नो हृद्गतस्य हरेः पञ्चरूपस्याधिष्ठानभूताः या एता नाड्यः हृत्पुण्डरीकस्य परितः स्थिताः सुषुम्ना, नान्दिनी, पिङ्गला, वज्रिका, इडा इतिनाम्न्यः ताः पञ्चनाड्यः पिङ्गलस्य पिङ्गलवर्णस्याणिम्नः सूक्ष्मतमस्य सङ्कर्षणस्य शुक्लस्य श्वेतवर्णस्याणुतमस्य वासुदेवस्य नीलस्य नीलसवर्णस्याणिम्नोऽनिरुद्धस्य पीतस्य पीतवर्णस्य प्रद्युम्नस्याणिम्नो रोहितस्य रक्तवर्णस्याणिम्नो नारायणस्य अधिष्ठानभूतास्तिष्ठन्तीति जिज्ञासितव्यमित्यर्थः । तत्रायं विवेकः । रोहितवर्णो नारायणो हृन्मध्यगतसुषुम्नायां तिष्ठति । शुक्लो वासुदेवः अग्रतः स्थितनान्दिन्याम् । पिङ्गलः सङ्कर्षणस्तु पश्चिमभागस्थपिङ्गलाख्यायाम् । पीतः प्रद्युम्नस्तु वामभागस्थवज्रिकाख्यायाम् । नीलोऽनिरुद्धस्तु दक्षभागस्थेडायां तिष्ठतीति । तन्त्रसारे तु चतुर्थे,

**मध्ये सुषुम्ना विज्ञेया वज्रिकाख्या प्रकाशिनी ॥**
**वैद्युता ब्रह्मनाडीति सैव पञ्चप्रभेदिनी ॥**
**पृष्ठवामाग्रदक्षान्तर्भेदास्ते च क्रमेण तु ॥**

**हरिन्नीलः सितः पिङ्गो लोहितश्चात्र केशवः ॥**

**'प्रद्युम्नादिस्वरूपेण ध्येयः'**

इत्युक्तम् । आदित्येऽपि पिङ्गलादिपञ्चरूपी तिष्ठतीत्याह– **असाविति** ॥ आदित्वादादित्यनामाऽऽदित्यमभिव्याप्य स्थितो हरिः पिङ्गलः सङ्कर्षणः , एष शुक्लो वासुदेवः , एष नीलोऽनिरुद्धः, एष पीतः प्रद्युम्नः, एष लोहितो नारायणः ॥ १ ॥

**तद् यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात् प्रतायन्ते त आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥**

न केवलं हृद्गतस्य हरेरादित्यस्थता, किन्तु तद्रश्मिषु व्याप्तता चास्तीत्याह– **तद्यथेति** ॥ तन्निदर्शनं यथा । महापथो महान् मार्गः इमं सन्निहितममुं विप्रकृष्टं चेत्युभौ ग्रामावाततो व्याप्तः सन् गच्छति, एवमेता आदित्यस्याऽदित्यस्थस्याऽदित्यनाम्नो हरेः रश्मयः आदित्यरश्मिषु व्याप्ताः सन्तः इमं जीवममुमादित्यं चेत्युभौ लोकौ गच्छन्तीति । उक्तगतिप्रकारं विशदमाह– **अमुष्मादिति** ॥ अमुष्मादादित्याद् ये रश्मयः प्रतीयन्ते तत्र प्रतीयन्त इत्यर्थः । ते आसु नाडीषु सृप्ताः व्याप्ताः । आभ्यो नाडीभ्यो ये रश्मयः प्रतीयन्ते तत्रत्या इति यावत् । ते अमुष्मिन्नादित्ये सृप्ताः व्याप्ताः ॥ २ ॥

*( हृदयस्थभगवद्रूपं प्राप्तवतो न पापलेप इति निरूपणम् )*

**तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा**

**सम्पन्नो भवति** ॥ ३ ॥

हृद्गतनाडीस्थभगवन्तं प्राप्तस्य पापालेपमहिमानमाह– **तद् यत्रेति** ॥ **तत्** तदा। यत्र हरौ एतत्सुप्तः एष जीवः सुप्तः समस्तः उपसंहृतेन्द्रियः अत एव बाह्यविक्षेपाभावात् सम्प्रसन्नः सम्यक् प्रसन्नः स्वप्नं स्वाप्नवस्तुजातं न विजानाति तदा आसु नाडीषु सुषुम्नाख्यनाडीस्थे हरौ सृप्तः प्राप्तो भवति। तदाह सूत्रे **'तदभावो नाडीषु तच्छ्रुतेरात्मनि ह'** (ब्र.सू.३.२.७.) इति। नाडीष्विति बहुवचनं प्रतिदेहापेक्षया। तं नाडीस्थभगवति सृप्तं पाप्मा पापं न स्पृशति संसृष्टं न भवति। तत्र हेतुः तेजसा हरिणा तदा सृप्तो हि यस्मात् सम्पन्नः तस्मादिति ॥ ३ ॥

**अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति** ॥ ४ ॥

नाडीस्थभगवदुपासनस्य फलमाह – **अथ यत्रेति**। अर्थान्तरे अथ-पदम्। यत्र यदा एतद् एष हृद्गतेश्वरोपासको ज्ञानी अबलिमानं ज्वरादिना दौर्बल्यं नीतः प्राप्तो भवति मुमूर्षुर्भवतीति यावत्। तमुपतापिनमभितः परिवार्य आसीनाः सन्तो ज्ञातयो जानासि मामित्याहुः वदन्ति। स एवं तैः पृष्टः यावद् यदाऽस्माच्छरीरादनुत्क्रान्तोऽनिर्गतो भवति तावत् तदा जानाति ॥ ४ ॥

*( सुषुम्नानाडीत उत्क्रमणं मुक्तेर्द्वारम् )*

**अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमते स ओमितिवाहोद्वामीयते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं प्रपदनं निरोधोऽविदुषाम्** ॥ ५ ॥

अथ यत्र यदा एतद् एषः शरीरादुत्क्रामति अथैतैर्नाडीगतैः रश्मिभिरूर्ध्वम् आक्रमते गच्छति । तदाह सूत्रे **'रश्म्यनुसारी'** (ब्र.सू.४.२.१८) इति । स ऊर्ध्वमाक्रममाणः ओमितिवाहा ओमिति-नामकहरिवाहकेन वायुनोद्धामीयते भद्रीक्रियते स वायुः यावद् यदा ज्ञानिनं नेतुं मनः क्षिपेत् कुर्वन् भवति तावत् तदाऽऽदित्यं गच्छति जीवः प्राप्नोति । आदित्यगतिः कुत इत्यत आह – **एतद्वै** आदित्यमण्डलं वै ब्रह्मलोकद्वारं विदुषां प्रपदनं प्राप्यम् अविदुषां निरोधः ॥ ५ ॥

*( उक्तार्थे मन्त्रकथनम् )*

**तदेष श्लोकः ॥**

**शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।**

**तयोर्ध्वमायन्नमृतत्वमेति विष्वङ् अन्या उत्क्रमणे भवन्ति उत्क्रमणे भवन्ति ॥ ६ ॥ ६ ॥**

हृदयस्थोपासको नाडीस्थरश्मिभिर्गच्छन् सूर्यद्वारा मुक्तो भवतीत्युक्तार्थे मन्त्रमाह– **तदेष इति** ॥ तत्र उक्तेऽर्थे । **हृदयस्य** हृदयमभिव्याप्य स्थिताः, **तासां** मध्ये **मूर्धानमभिव्याप्य** निस्सृता स्थिता । **विष्वगुत्क्रमणे** लोकान्तरगमने । **अन्या** मूर्धन्यनाडीतोऽन्याः । तदाह सूत्रकारः – **'हार्दानुगृहीतः शताधिकया'**(ब्र.सू.४.२.१७) इति । द्विरुक्तिरादरार्था ॥ ६ ॥**इति षष्ठः खण्डः ॥**

**अथ सप्तमः खण्डः**

*( इन्द्रविरोचनौ प्रति चतुर्मुखब्रह्मकृतोपदेशः )*

**य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽ-**

**पिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वा॒ंश्च लोकानाप्नोति स सर्वा॒ंश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥**

ब्रह्मचर्यादिज्ञानसाधनमनुतिष्ठतां सर्वेषामस्ति ज्ञानोदय इत्यतो योग्यस्यैव नाऽयोग्यस्येत्येतदाख्यायिकयाऽह– **य आत्मेति** ॥ अन्वेषणं नाम श्रवणादिरूपजिज्ञासैवेति भावेनोक्तं **'स विजिज्ञासितव्यः'** इति । योऽधिकारी तमुक्तरूपमात्मानमन्विष्य विजिज्ञास्य विजानात्यपरोक्षतः स ज्ञानी सर्वांश्च लोकानित्यादि प्रजापतिर्ब्रह्मोवाच ॥ १ ॥

**तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वा॒ंश्च लोकानाप्नोति सर्वा॒ंश्च कामानितीन्द्रो हवै देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥**

तद् उभये देवाश्चासुराश्चेति द्वौ वर्गौ अनुबुध्य ज्ञात्वोचुर्ह । किमिति ? **हन्त तमित्यादि** ॥ हन्त हर्षे । देवानामर्थे इन्द्रो असुराणामर्थे विरोचन-श्चाभिप्रवव्राज जगाम । तौ ह द्वावसंविदानौ अन्योन्यप्रीतिरहितौ समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥

**तौ ह द्वात्रि॒ंशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति तौ होचतुर्य आत्माऽप-हतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्य-कामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वा॒ंश्च कामान् यस्तमात्मानमनुविद्य विजाना-तीति ह भगवतो वचो हरन्तो वेदयन्ते तमिच्छन्ताववास्तमिति॥३।**

तौ यद् यदा द्वात्रिंशतं द्वात्रिंशद्वर्षाणि ब्रह्मचर्यं ब्रह्मज्ञानमुद्दिश्योषतुः वासं कृतवन्तौ । तदा तौ ह किमिच्छन्तौ अवास्तं वासमकुरुतमिति प्रजापतिरुवाच । ताविन्द्रविरोचनावूचतुः । किमिति ? य आत्मेत्यादिकं भगवतो महानुभावस्य तव वचो वाक्यं हरन्तो व्यवहरन्तो जनाः वेदयन्ते बोधयन्ति । इममात्मानं ज्ञातुमिच्छन्ताववात्स्वेति[१] । अवात्समिति पाठे प्रत्येकमन्वयः । वासं कृतवन्तौ स्व इत्यर्थः ॥ ३ ॥

**तौ ह प्रजापतिरुवाच य एषोऽन्तरक्षणिपुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ॥ ४ ॥ ७ ॥**

तौ ह प्रजापतिरुवाच । किमिति ? तदाह– **य एष इति** ॥ दृश्यते दिव्यदृष्ट्या । चक्षुर्गतं प्रतिबिम्बमेवाऽत्मेति मन्वानो विरोचनः पुनः पृच्छति – **अथ योऽयमिति** ॥ परिख्यायते प्रतीयते । आदर्शे दर्पणे परिख्यायत इत्यन्वेति । एष अबादिस्थितप्रतिबिम्बरूपः । कतम इति प्रश्नस्योत्तरमेष अक्षिगत एव सर्वेषु स्थलेषु परिख्यायत इति । अन्तेषु स्थलेषु । इन्द्रस्तु प्रतिबिम्बादन्यदेव ब्रह्मेति जानन्नपि अज्ञवद् विरोचनवदेव प्रश्नादिकमकरोदिति ज्ञेयम् ॥ ४ ॥ **इति खण्डः - ७ ॥**

## अथ अष्टमः खण्डः

*( विरोचनस्यायथार्थज्ञानमुत्पन्नम् – इति निरूपणम् )*

**उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति**

१. 'अवास्तेति' इति श.पाठः । 'अवास्तम्' इति मुद्रितपुस्तकस्थः पाठः ।

**तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति ॥ १ ॥**

तत्त्ववेदिविवक्षया दिव्यदृष्टिगोचरोऽक्षिगत एव भगवान् सर्वस्थलेषु परिख्यायत इति ब्रह्मणोक्तेऽपि सर्वत्राक्ष्यबादौ स्थितः प्रतिबिम्ब एवाऽत्मेति व्यजानाद् विरोचनः । तत्त्वं ज्ञातुं योग्यताऽवश्यमपेक्षितेति भावेन प्रतिबिम्बो बिम्बगुणेन गुणी बिम्बदोषेण दुष्टः स कथं ब्रह्म स्यादिति भावेनाऽह – **उदशरावेति** ॥ उदकपूर्णशरावे आत्मानं स्वशरीरमवेक्ष्याऽत्मनः सम्बन्धि यद् विजानीथः पश्यथः तन्मे प्रब्रूतमिति प्रजापतिरुवाचेत्यर्थः । एवमुक्तौ तावुदशरावे आत्मनोऽवेक्षाञ्चक्राते । तौ ह प्रजापतिरुवाच किं पश्यथः? इति । तौ होचतुः सर्वमेवेदम् [१] । तद् व्यनक्ति – हे भगवः! आवाम् आलोमभ्य आनखेभ्यः लोमनखाद्युपेतं प्रतिरूपं प्रतिबिम्बभूतमात्मानं शरीरं पश्याव इति होचतुः ॥ १ ॥

**तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥ २ ॥**

तौ ह प्रजापतिः पुनरुवाच । किमिति ? साध्वलङ्कृतौ परिष्कृतौ अनुलेपादिमन्तौ भूत्वा । शिष्टं स्पष्टम् ॥ २ ॥

**तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृताविति एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति तौ ह शान्तहृदयौ**

१. अत्र इतीति पदमपेक्षितम् ।

**प्रवव्रजतुः** ॥ ३ ॥

यथैवेदमिति सामान्येनोक्तं व्यनक्ति– **साध्वलङ्कृतावित्यादि ॥ स्वः** भवावः इमौ प्रतिबिम्बौ । हे भगवन् ! इति होचतुरित्यन्वयः । एवं देहगुणेन गुणोपेतः तथा तुल्यन्यायतया तद्दोषेण दोषयुक्त एषः प्रतिबिम्बः आत्मा एतदमृतमभयमिति काकुस्वरेण प्रजापतिरुवाच ह । कथमात्मा कथममृतमभयमित्यर्थः । एवं काक्वोक्तमजानन्तौ ताविन्द्रविरोचनौ यथास्थितप्रतिबिम्बमेव ब्रह्मेति जानन्तौ शान्तहृदयौ ब्रह्मवेदिनौ प्रवव्रजतुर्जग्मतुः ॥ ३ ॥

**तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्याऽत्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम तेभ्यो हैतामुपनिषदं प्रोवाचाऽत्मैवेह मह्य्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ॥ ४ ॥**

गच्छन्तौ तावन्वीक्ष्य प्रजापतिः स्वस्य मध्यस्थतां ज्ञापयन्नुवाच । किमिति ? आत्मानम् अनुपलभ्य तस्य विवरणं अननुविद्याज्ञात्वा व्रजतः सकाशाद् यतरे ये एतदुपनिषदः एतद्रहस्योपदेशवन्तः भविष्यन्ति, देवा वा असुरा वा ते पराभविष्यन्ति पराजयवन्तो भवन्तीत्युवाचेति पूर्वेणान्वयः । स एवमुक्तो विरोचनः शान्तहृदयो मयाऽऽत्मा ज्ञात इति बुद्धिमानेवासुरान् जगाम । तेभ्यः एताम् उपनिषदं, प्रतिबिम्बमेव ब्रह्म देहालङ्कारादौ सति ब्रह्मण एव तद् भवतीत्येतद् रहस्यं प्रोवाच । तदेव विशदमाह– **आत्मैवेति** ॥ स्वदेह एव मह्य्यः पूज्यः । आत्मानमेव देहमेव महयन् पूजयन् । इति प्रोवाचेत्यन्वयः ॥ ४ ॥

**तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणाꣳ ह्येषोपनिषत् प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति सꣳस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥ ८ ॥**

तस्माद् देह एव पूज्य इत्यस्यासुरपक्षत्वादेव । अपि अद्यापीहाददानमश्रद्दधानमयजमानं यज्ञादिकमकुर्वन्तं स्वात्मभोगमात्रासक्तं जनमाहुः प्राज्ञाः । अयमासुरस्वभावो बत कष्टमिति । एषोपनिषद् यज्ञाद्यननुष्ठानादिकमसुराणां रहस्यम् । हि यतोऽत इति विरोचनेनोपदिष्टा असुरा अद्यापि प्रेतस्य शरीरं भिक्षया अन्नपानेन गन्धमाल्यादिना वसनेनालङ्कारेण, इतिशब्द आद्यर्थः । अलङ्कारादिना संस्कुर्वन्ति भूषयन्ति । एते प्रेतदेहमलङ्कुर्वन्तो जना अमुं लोकं परलोकं जेष्यन्तः प्राप्स्यन्त इति मन्यन्ते ॥ ५ ॥ ८ ॥

## अथ नवमः खण्डः

*( इन्द्रकृतनिरन्तराध्ययनम् )*

**अथ हेन्द्रोऽप्राप्यैव देवानेतद् भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति ॥ १ ॥**

अथानन्तरम् इन्द्रो देवानप्राप्यैव एतद् वक्ष्यमाणं भयं ददर्श । तदाह – **यथैव खल्वयमिति** ॥ अयं प्रतिबिम्बः **स्रामे** कुष्ठादिना विवर्णे, **परिवृक्णे** च्छिन्नावयवे अत्र प्रतिबिम्बं ब्रह्मेत्यत्र भोग्यमुपादेयं न पश्यामीत्यालोच्य ॥ १ ॥

नाहमत्र भोग्यं पश्यामीति स समित्पाणिः पुनरेयाय त९ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन् पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

समित्पाणिः स इन्द्रः पुनः प्रजापतिमेयाय प्राप। तं हेत्यादि व्यक्तम्। **आगमः** आगतवानसीत्युवाचेत्यन्वयः । **स** इन्द्र उवाच । तदाह– **यथैवेति** ॥ **अयं** प्रतिबिम्बः । पश्यामीत्युवाचेन्द्र इति पूर्वेणान्वयः । प्रजापतिराह – **एवमेवेत्यादिना** ॥ २ ॥

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिं९शतं वर्षाणीति स हापराणि द्वात्रिं९शतं वर्षाण्युवास तस्मै स होवाच ॥ ३ ॥ ९ ॥

**एतं** तु वक्ष्यमाणं तु। **स** इन्द्रः। **तस्मै** इन्द्रायोवाच ब्रह्मा ॥ ३ ॥ ९ ॥

## अथ दशमः खण्डः

*( तत्त्वज्ञानप्राप्तौ योग्यताऽऽवश्यकीति कथनम् )*

य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद् भयं ददर्श तद्यद्यपीद९ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो

**नैवैषोऽस्य दोषेण दुष्यति** ॥ १ ॥

तदाह – **य एष इति** ॥ **य एष** भगवान् **स्वप्ने** कण्ठदेशे स्वप्नावस्थायां स्वाप्नपदार्थप्रदर्शकः सन् **महीयमानः** पूज्यमानश्चरति, एष आत्मेत्याद्युवाच । **स इन्द्रः** । ब्रह्मोक्तं स्वप्नावस्थाप्रवर्तकं जानन्नप्य-सुरमोहनाय स्वप्ने दृश्यो जीव एवाऽत्मेत्युवाच । प्रजापतिरिति मन्वान इव देवानप्राप्यैवैतद् भयं ददर्श । तदाह – **तद् यदपीति** ॥ यद्यपीदं शरीरमन्धं स्रामं चेदपि स स्वप्ने महीयमानो जीवोऽन्धादिर्न भवति । अस्य देहस्य दोषवधादिना न दोषवधादिभाक् । **तत्** तर्ह्यपि ॥ २ ॥

**न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति वैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति** ॥ २ ॥

एनं स्वप्ने महीयमानं स्वप्नद्रष्टारं घ्नन्ति तु घ्नन्तीव, विच्छादयन्तीवादन्तीव,अप्रियवेत्तेव अप्रियं लब्धेव, अप्रियं वेदितेति वा भवति । **अत्र** ब्रह्मोक्तेऽर्थे । **भोग्य**मुपादेयम् ॥ २ ॥

**स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति स होवाच तद्यदपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति** ॥ ३ ॥

**न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति वैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते**

**भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिँ शतं वर्षाणीति स हापराणि द्वात्रिँ शतं वर्षाण्युवास तस्मै स होवाच ॥ ४ ॥१० ॥**

स समित्पाणिरित्यादि पूर्ववद् व्यक्तम् ॥३-४॥इति **दशमः खण्डः ॥**

## अथ एकादशः खण्डः

*( एकशतवर्षावधिकः इन्द्रकृतगुरुकुलवासः )*

**तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद् भयं ददर्श नाहं खल्वयमेवँ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विना शमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥**

तस्मै स होवाचेत्युक्तम् । किमुक्तमिन्द्राय प्रजापतिनेत्यत आह **तद्यत्रेति** ॥ तदेतत् स एष जीवो यत्र यस्मिन् हरौ सुप्तः स्वापं प्राप्तः, समस्तः उपसंहृतेन्द्रियः, अत एव सम्प्रसन्नः प्रसादयुक्तः स्वप्नं न विजानाति सुषुप्तिं प्राप्नोतीत्यर्थः । एष आत्मेत्युवाच ब्रह्मा । स इन्द्रः सुप्त्यवस्थाप्रवर्तको भगवान् जीवादन्योऽस्ति आत्मेति ब्रह्मोक्तं जानन्नप्यसुरमोहाय जीवादन्यं न पश्यामि यत्र सुप्तो जीव एष आत्मेति कथमुवाच ब्रह्मेति जीवादन्यमपश्यन्निव अजानन्निव च । देवानप्राप्यैवैतद् भयं ददर्श । तदाह– **नाहमिति** ॥ अहं खलु सुप्तः अयमहमस्मीति न जानाति न जानामि । व्यत्ययात्[१] । एवं ब्रह्मणोक्तप्रकारेणाधिकरणभूतमात्मानं न जानामि । इमानि भूतानि च नो एव जानन्त्यतो

१. 'व्यत्ययो बहुलम्' इति पाणिनिवचनाद् उत्तमपुरुषार्थे प्रथमपुरुष इत्यभिप्रायः ।

नास्त्येवाऽधारभूत आत्मेति । तर्हि अस्तु जीवः परमात्मनि सुप्तावेकीभूत इति । यद्यपीतो एकीभूतो भवति तर्हि शं सुखं विनैव स्यात् , सुप्तौ सुखानुभवहीन एव स्यादिति यावत् । नच वाच्यं सुखानुभवहीनः स्यादिति । 'एतावन्तं कालं सुखमहमस्वाप्सम्'' इति सुप्त्युत्थितस्य परामर्शो न स्यात् । अत्र ब्रह्मोक्तेऽर्थे भोग्यमुपादेयम् ॥ १ ॥

**स समित्पाणिः पुनरेयाय त९ँ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः किमेवेच्छन् पुनरागम इति स होवाच नाहं खल्वयं भगव एव९ँ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विना शमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥**

इत्यालोच्य । समित्पाणिरित्यादि प्राग्वद् व्यक्तम् ॥ २ ॥

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद् वसापराणि पञ्च वर्षाणीति स हापराणि पञ्च वर्षाण्युवास तान्येकशतं सम्पेदुरेतत् तद् यदाहुरेकशत९ँ ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास तस्मै स होवाच ॥ ३ ॥ ११ ॥**

एतस्मादात्मनोऽन्यत्र अन्यत् नो एव नैवास्त्युपदेष्टव्यम्, एतं त्वेव ते भूयः पुनः अनुव्याख्यास्यामीति योज्यम् । तानि इन्द्रेण प्रजापतौ ब्रह्म-ज्ञानार्थमुषितानि वर्षाणि एकशतं एकोत्तरशतं सम्पेदुः सम्पन्नान्यभूवन् । एकशतं वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवासेति यदाहुः प्राज्ञाः, तदेतत् पूर्वोक्तप्रकारेण ज्ञातव्यम् ॥ ३ ॥

॥ इति एकादशः खण्डः ॥

## ॥ अथ द्वादशः खण्डः ॥

*( सति शरीराभिमाने दुःखमवर्जनीयम् )*

**मघवन् मर्त्यं वाव इदꣳ शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्याऽत्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥**

''य एषोऽन्तरक्षिणि''इत्यादिना जीवस्य जाग्रत्स्वप्नसुषुप्त्यवस्थाप्रवर्तको हरिरित्युपदिश्य प्रकारान्तरेण तस्य जीवाद् वैलक्षण्यमुपपादयति– **मघवन्नित्यादिना** ॥ तत्र तावद् जरामृत्युपरीतशरीरवत्त्वतद्राहित्यलक्षणं जीवब्रह्मणोर्वैलक्षण्यमादावाह– **मघवन्निति** ॥ हे **मघवन्निदं** जीवशरीरं **मृत्युना आत्तं** व्याप्तमतो मर्त्यं विनाशि । तच्छरीरको जीवोऽपि विनाश्येव । तद् जीवशरीरं अशरीरस्य प्राकृतदेहहीनस्यात एवामृतस्याविनाशिन आत्मनो हरेरधिष्ठानम् । जीवेशयोः प्रियाप्रियस्पृष्टत्वतदस्पृष्टत्वरूपं वा लक्षणान्तरमाह – **आत्त इति** ॥ सशरीरो जीवः प्रियाप्रियाभ्यां परेण प्राप्यसुखदुःखाभ्यामात्तः आक्रान्तः । प्रसिद्धमेतदित्याह – **न हवा इति** ॥ अपहतिर्हानिर्नास्ति । हवै प्रसिद्धम् । वावेत्यवधारणे । अशरीरं सन्तं हरिं नैव स्पृशत इति वैलक्षण्यमित्यर्थः ॥१॥

*( प्राकृतशरीररहितभगवत्सकाशादेव मुक्तिः )*

**अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि तद् यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन**

**रूपेणाभिनिष्पद्यन्ते** ॥ २ ॥

जीवन्मुक्तान् वाय्वादीनपि प्रियाप्रिये न स्पृशतः, किमु विष्णुशरीरम् ? इति भावेनाऽह– **अशरीरो वायुरिति** ॥ वायुर्मुख्यवायुः अशरीरः । अभ्रम्, आप्नोति व्याप्नोति जगदित्यपृशब्दितेन हरिणा भ्रियमाणत्वादभ्रं ब्रह्मा, विशेषेण द्योतत इति विद्युन्नाम्नी भारती, स्तनयित्नुः सर्वशब्दमानित्वात् स्तनयित्नुनाम्नी सरस्वती, इत्येतानि त्रीण्यशरीराणि । वायुश्चाशरीरः । वाय्वादयश्चत्वारो देहवन्तोऽपि तदभिमानाभावादशरीराण्येव । तादृशान्यपि प्रियाप्रिये न स्पृशतः, किमु परेशमिति वाक्यशेषः । अत्र, यद्यपि ब्रह्मवाय्वोः परेणेयं भगवता प्राप्यं प्रियमस्ति, भारतीसरस्वत्योस्तु भगवत्प्राप्यं स्वस्वभर्तृप्राप्यं चास्ति सुखं, तथाऽपि तदन्येन प्राप्यं सुखं नेति प्रियस्पृष्टिश्चतुर्णां नेत्युक्तम् । मुक्तोऽपीशप्रसादादेव भोगान् भुङ्क्ते । अतोऽपि जीवेशयोर्वैलक्षण्यमित्याह – **तद्यथेति** ॥ तन्निदर्शनं यथा । एतानि वाय्वभ्रविद्युत्स्तनयित्नुशब्दितानि अमुष्मादाकाशात् परमात्मनः समुत्थाय उत्पद्य परञ्ज्योतिः परमात्मानमेवोपसम्पद्य स्वेन रूपेण निजानन्दानुभवरूपेणाभिनिष्पद्यन्ते ॥ २ ॥

**एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा नोपजनꣳ स्मरन्निदꣳ शरीरꣳ स यथा प्रायोग्य आचरणे युक्त एवमेवायमस्मिन् शरीरे प्राणो युक्तः** ॥ ३ ॥

एवमेवैष ज्ञानी जीवः सम्प्रसादः सम्यक् भगवत्प्रसादयुक्तः अस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेण निजा-

नन्दानुभवरूपेणाभिनिष्पद्यते । उक्तवैलक्षण्यसिद्धमर्थमाह– **स इति ॥** यं प्राप्य मुक्तोऽभूत् स परञ्ज्योतिश्शब्दोक्त उत्तमः पुरुषः । स मुक्तो जीवः तत्र भगवल्लोके पर्येति परितः सञ्चरति । कथम् ? जक्षन् भक्षयन् क्रीडन्नित्यादि । ज्ञातिभिः सहमुक्तैरज्ञातिभिः पूर्वमुक्तैर्वयस्यैः सखिभिः । तदाह सूत्रकारः– **"उत्तराच्चेदाविर्भूतस्वरूपस्तु"**(ब्र.सू.१–३–१९), **'विहारोपदेशात्'**(ब्र.सू २.३.३३) इति च । रमणातिशयप्रकारमाह– **नोपजनमिति ॥** उपजनं परिसरवर्तिजनम् । शरीरं स्वशरीरं च न स्मरन् रमत इति रमणातिशयोक्तिः। पूर्वं तदेतच्छरीरमशरीरस्याऽत्मनोऽधिष्ठानमित्युक्तम् । तत्र जीवो वा चक्षुरादिर्वाऽस्तु तदधिष्ठातेत्यतो जीवस्यासामर्थ्याच्चक्षुरादेः करणत्वान्नाधिष्ठातृत्वमिति सदृष्टान्तमाह– **स यथेति ॥ आचरणे** रथप्रवर्तने **स** बुद्धिस्थः **प्रायोग्यः** सारथिः याने यथा नियुक्तः **एवमेवायं प्राणो** मुख्यवायुरस्मिन् **शरीरे** तत्प्रवर्तनाय **युक्तः** सारथित्वेन नियुक्तः । विष्णुस्तु रथिकवद् देहाधिष्ठातेत्युक्तमेव । जीवस्तु अन्यरथगवत् तिष्ठतीति भावः ॥ ३ ॥

*( इन्द्रियेषु भगवदुपासना )*

**अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेद९ँशृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥**

चक्षुरादेरन्यप्रयोज्यत्वरूपकरणत्वान्न देहाधिष्ठातृत्वमिति भावेन तस्य करणत्वमाह – **अथ यत्रैतदिति ॥** एतच्चक्षुर्यत्र यदधीनं सद् रश्मिभिराकाशमनुविषण्णमभिव्याप्तमस्ति स चाक्षुषः चक्षुःस्वामी पुरुषः हरिः देहाधिष्ठाता रथिकवदिति भावः । दर्शनाय चक्षुःकरणमिति यावत् । नतु

देहाधिष्ठात्रिति भावः। भगवान् स्वरूपेन्द्रियैः सर्वभोगान् भोक्तुं शक्तोऽपि लीलया जीवदेहमधिष्ठाय स्वकीयेन्द्रियमिलितैर्जीवदेहगतचक्षुरादीन्द्रियैः पुरुषभोग्यविषयान् सर्वान् भुङ्क्त इति तात्पर्यं ज्ञेयम्। **"ज्योतिराद्यधिष्ठानं तु तदामननात्"** (ब्र.सू.२.४.१५) इत्यत्र चक्षुरादिकरणानां भगवदीयत्वसमर्थनात्। अथ यो देहाधिष्ठाता विष्णुः इदं सुगन्धं जिघ्राणीति वेद स आत्मा देहस्वामी। गन्धाय तस्य गन्धज्ञानाय घ्राणमित्यर्थः। एवमग्रेऽपि ज्ञेयम् ॥ ४ ॥

**अथ यो वेदेदं मन्वानीति स आत्मा(मननाय मनो)ऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते ॥ ५ ॥**

स आत्मेत्यनन्तरं मननाय मन इति पूरणीयम्। न केवलं देहाधिष्ठातृत्वमात्रं, किन्तु मनआदीन्द्रियाण्यप्यधिष्ठाय भोगान् भुङ्क्त इति भावेनाऽह – **दैवं मनः दैवं चक्षुरिति** ॥ देवाधिष्ठितमित्यर्थः। यद्वा, दैवं तत्तदभिमानिदेवाधिष्ठितमित्यर्थः। अन्येन्द्रियेभ्यो जीवेन्द्रियेभ्यः अनयोः परमात्मेन्द्रियाभिमानिनोर्दीप्यमानत्वाद् एते दैवमनश्चक्षुषी भगवतो विषयभोगे मुख्यकारणमित्याह – **स वा एष इति** ॥ ५ ॥

**य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात् तेषाꣳ सर्वे च लोका आत्ताः सर्वे च कामाः सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥ १२ ॥**

एवं हरिरेव जीवशरीरमधिष्ठाय सारथ्यदिरूपान् प्राणादीन् नियमयतीत्येवमुपासकस्य फलमितिहासपूर्वमाह– **य एत इति** ॥ ब्रह्मलोके

य एते देवाः तमेवमात्मानमुपासते । तेषु देवेषु रमत इत्यन्वयः । तस्माद् तदुपासनावत्त्वात् तेषां सर्वे लोका आत्ता प्राप्ताः । योऽधिकारी तमात्मानमनुविद्य शास्त्रतो विचार्य विजानात्यपरोक्षतः स ज्ञानी सर्वान् लोकान् सर्वांश्च कामानाप्नोतीति प्रजापतिनोक्तं सर्वमनूद्योपसंहरत्युपनिषत्– **इति ह प्रजापतिरुवाचेति** ॥ ६ ॥ इति खण्डः –१२ ॥

## ॥ अथ त्रयोदशः खण्डः ॥

*( मोक्षप्रार्थना )*

**श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यभिसम्भवामीति** ॥ १ ॥ १३ ॥

एवं शरीरहृद्गतस्योपास्तिमुक्त्वा तत्साध्यां तद्योग्यानां विश्वरूपोपास्तिमाह– **श्यामादिति** ॥ श्यामाद् हृद्गतरूपात् तदुपासनयेति यावत्, शबलं शबलवर्णं चक्षुर्गतं विश्वरूपं प्रपद्ये उपास्य ज्ञातवानस्मि । शबलाद् विश्वरूपानुग्रहात् श्यामं हृद्गतं प्रपद्ये उपास्य ज्ञातवान्, प्राप्नुयामिति वा । एवं हृद्गताक्षिस्थयोरुपास्तिमुक्त्वा तत्प्रार्थनाप्रकारमाह– **अश्व इवेति** ॥ अश्वो रोमाणीवाहं पापं विधूय राहोर्मुखाच्चन्द्र इव शरीरं धूत्वा प्रमुच्य कृतात्माऽहमकृतं नित्यं ब्रह्मलोकमभिसम्भवामीति । द्विरुक्तिरादरार्था ॥ १ ॥ इति त्रयोदशः खण्डः ॥

## ॥ अथ चतुर्दशः खण्डः ॥

*( यशः प्रार्थना )*

**आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म तदमृतꣳ स**

**आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवानि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्वेतमदत्कमदत्कं श्वेतं लिन्दुमाऽभिगां लिन्दुमाऽभिगाम्**
॥ १ ॥ १४ ॥

पूर्वं ''यावान् वा अयमाकाशः'' इति व्याप्तो हरिः प्रकृतः । तदुपास्तिमाह– **आकाश इति** ॥ आ समन्तात् काशते प्रकाशत इत्याकाशनामा हरिः नामरूपयोर्निर्वहिता शब्दप्रपञ्चार्थप्रपञ्चयोर्निर्वोढा वै नाम प्रसिद्धम् । यत् ते नामरूपे अन्तरा विना वर्तते तद् ब्रह्म तदमृतं स आत्मा इत्युपासितव्यमित्यर्थः । तदाह सूत्रे – **''आकाशोऽर्थान्तरत्वादिव्यपदेशात्''**(ब्र.सू. १.३.४१)इति । तत्प्रार्थनाप्रकारमाह– **प्रजापतेरिति** ॥ भगवतः सभां वेश्म च प्रपद्ये । ब्राह्मणानां मध्ये यशो यशस्वी भवामि, राज्ञां यशो यशस्वी विशां यशोऽहमनुप्रापत्सि प्राप्नुयाम्, स हाहं सोऽहं यशसां यशः यशस्विनां यशोदा अहं स्याम् । यद्वा यशस्विनां यशोदातृ श्वेतं श्वसनम् इतं प्राप्तं श्वसने स्थितम् । 'श्वसनगम्' इति क्वचिद् भाष्यपाठः । तदा वायुगमित्यर्थः । अदत्कं अनुभूयमानसुखोपेतं लिन्दुं रतिप्रदं हरिम् आभिगामभ्यगां प्राप्तवानस्मीति चतुर्मुख उवाचेति योज्यम् । द्विरुक्तिरादरार्था ॥ १ ॥ इति चतुर्दशः खण्डः ॥

**॥ अथ पञ्चदशः खण्डः ॥**

*( सम्प्रदायप्राप्तशास्त्रश्रवणादितः शाश्वतमोक्षलाभनिरूपणम् )*

**तद्धैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्**

**विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिꣳसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते नच पुनरावर्तते नच पुनरावर्तते ॥ १ ॥ खण्डः १५ ॥**

**॥ इति श्रीमच्छान्दोग्योपनिषदि अष्टमोऽध्यायः ॥**

**॥ इति श्रीमच्छान्दोग्योपनिषत् सम्पूर्णा ॥**

आदरजननाय एतदुपनिषत्प्रवर्तकानाह श्रुतिः – **तद्धैतदित्यादिना ॥** तदेतद् ब्रह्मा भगवान् प्रजापतये चतुर्मुखाय, स च स्वायम्भुवमनवे, स च प्रजाभ्य उवाचेत्यर्थः । एवं परम्परागतत्वादद्यतनोऽपि मुमुक्षुरेतदभ्यासी स्यादित्याशयेनैतदुपनिषदभ्यासिनो यमनियमोक्तिपूर्वमपुनरावृत्तिरूपं फलमाह– **आचार्येत्यादिना** ॥ आचार्यकुलाद् वेदमधीत्य सहार्थतोऽध्ययनं कृत्वा, यथाविधानं गुरोः कर्म अतिशेषेण निश्शेषेण अभिसमावृत्य समाप्य, कुटुम्बे गृहस्थाश्रमे वर्तमानः शुचौ देशे स्वाध्यायमधीयानः, धार्मिकान् धर्मसम्बन्धिनो विदधद् विशेषेण धारयन्, आत्मनि परमात्मनि सर्वेन्द्रियाणि सम्यक् प्रतिष्ठाप्य सर्वेन्द्रियाणि विषयेभ्यः प्रत्याहारेण निरुध्य बहिर्वृत्तिचित्तं परमात्मनि सम्यक् प्रतिष्ठाप्येति यावत् । तीर्थेभ्यः शास्त्रोक्तेभ्यः यत्र यज्ञादौ हिंसा शास्त्रोक्ता ततोऽन्यत्र सर्वभूतान्यहिंसन्, स खलु कुटुम्बी यावदायुषं एवं वर्तयन् वर्तमानः ब्रह्मलोकमभिसम्पद्यते । नच पुनरावर्तते, तत्रैव निजानन्दमनारतमनुभवन्नास्त इति । पुनरुक्तिरादरार्था । एतच्च कृत्स्नगृहस्थाश्रमधर्मोपेतदेवविषयम् । तदाह सूत्रे– “**कृत्स्नभावात्तु गृहिणोपसंहारः**”(ब्र.सू. ३–४–४७) इति ॥ १ ॥ **इति पञ्चदशः खण्डः ॥**

इति छान्दोग्योपनिषद्भाष्याद्युक्तार्थसङ्ग्रहः ।
राघवेन्द्रेण यतिना कृतः सज्जनसंविदे ॥

**समस्तगुणपूर्णेन श्रीप्राणपतिनेरितः ।**
**यदवोचमहं तेन प्रीणातु पुरुषोत्तमः ।।**

।। इति श्रीमच्छान्दोग्योपनिषदर्थसङ्ग्रहे सुधीन्द्रगुरुपादशिष्य-
राघवेन्द्रयतिकृते अष्टमोऽध्यायः सम्पूर्णः ।।

।। श्रीकृष्णार्पणमस्तु ।।